भागवतकथानक[१]मिव सकृष्णसारक्रीडितं शुक[२]मुखलालितञ्च, सत्तीर्थमिव मुनितरुराजि[३]राजितं, राजगृहमिव पुन्नागकलितं, नर्तकसदनमिव सतालं निषादर्षभगान्धर्वसहितं च, मुग्धगीतमिव असुरसंग्रामरहितं निषादर्षभगान्धर्व-सहितं च—

बिभ्रतं वनमत्युच्चैः शिरसा दैवदारवम् ।
मुञ्चन्तं कन्दरोद्गारैर्निर्झरैश्च सदा रवम्[४] ॥ १६ ॥

वनसमूहं पश्यन् ययौ ।

कस्तूरिका मृगविमर्दन[५]पंकिलानि
भ्राम्यद्द्विरेफकुलगुञ्जितमञ्जुलानि ।
वीरुद्वलल्ललित[६]पल्लवकोमलानि
पश्यन् ययौ स मिहिकाद्रिवनस्थलानि ॥ १७ ॥

उच्चप्रपातपतितानि मरालबाल-
संचालितानि विकचाम्बुजमालितानि ।
सत्सिद्धकिन्नरवधूस्तनलोलितानि
पश्यन् ययौ नृपवरो मिहिकाजलानि ॥ १८ ॥

---

१. Writes wrongly मक for नक L

२. सुख D, शुख L

३. Omits the word राजि L

४. In MS G this verse follows the next verse (कस्तूरिका मृग etc.)

५. विमर्दित G

६. DL read वीरुल्लतानिचय which may also have been the original reading in G because at this place six letters appear to have been suppressed first by overwriting and then by striking them off whereas the reading वलल्ललित etc. has been noted in the lower margin. I prefer this reading to वीरुल्लतानिचय because of the tautology involved in the expression वीरुल्लता (i.e. because both वीरुध् and लता mean one and the same thing, cf. 'लता प्रतानिनी वीरुत्,' अमरकोश II 1.).

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

दरीभिरुपशोभितो विबुधसुन्दरीभिः क्वचित्
क्वचित् प्रबलवानरैरपि च कुत्रचिद् वा नरैः ।
महामदलसद्गजै[१]र्जनितभूरिशोभोऽगजैः
क्वचिद् हरिणबालकैः क्व च हरिद्धधूपालकैः ॥ १९ ॥

क्वचिदहो कलभैश्च मुदा रवः
समरचि, स्फुटिताः सुरदारवः ।
लसति किन्नरगीतिमनोहरः
सरति गन्धवहः सुमनोहरः ॥ २० ॥

विदलिता दलिताम्बुरुहावली
गज[२]वरेण वरेण करेण च ।
सुकुमुदं कुमुदं मधुपावली
परिगताऽरिगताद् भयतो निशि ॥ २१ ॥

अलिगणो वि[३]गणय्य कदम्बकं
स्फुरितसौरभसारकदम्बकम् ।
अनुययौ सुरसिद्धवधूसरः
स्फुटितलोध्रपरागविधूसरः ॥ २२ ॥

शंखचक्राम्बुजोपेतो वनमालाविभूषितः ।
उमातातोऽपि लक्ष्मीवान् गिरिराजोऽपरो हरिः ॥ २३ ॥

---

१. लसद्रजैः L

२. L राज (ग wrongly read as रा),
D also has रा which has later been corrected into ग.

३. L अलिषतोलि, D also curiously has the same reading which has later been corrected into अलिवरो.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

यश्च विविधसमुल्लसत्शिखरकूटाकरजनीलपीतहरितकपिशशोणमणि-मञ्जरीनिचयसमुल्लासितेन्द्रचापचयखचितजलधरावलीविलोड्यमान-गगनाङ्गणप्रसरः प्रसरत्सहस्रभानुभानुनिःसरज्ज्वालमालाजाललालितगगन[१]-तलतापनिर्वापणायेव, स्वर्गमार्गावरोहणाय सोपानपरम्परां रचयितुमिव, त्रिजगत्सर्ग-कारणभूतपितामहचरणारविन्दमभिनन्दितुमिव, चिरोषितनिजतनूजनिं स्वर्गा-पगामानेतुमिव, विधुमण्डलोच्छलितबहलसुधास्वादमास्वादितुमिव, परिवर्धित-शिखरसहस्रसमुल्लसद्विन्ध्याचलसमीर्ष्ययेव, निरवलम्बगमनरविरथ-तुरङ्गमावलम्बनायेव, सहस्रकरसन्तापितानूरुतापनिर्वापणायेव, आग-मिष्यमाणगङ्गाप्रवाहमार्गशोधनायेव, तुषारासारनिष्यन्दामन्दसन्दोहसुन्दरैः शिखरि-शिखाशेखरैः शिखरैरभ्युन्नतः[२] ।

शरद्घन[३]घनप्रभाभरविभावनाभासुरैः
सुरैरुपरि सेवितैः सकल[४]सिद्धसंघावृतैः ।
वियच्छिखरशेखरैरभवदावृतं मन्थनो-
च्छलद्बहलभासुराकृतिपयोधिपूरैरिव ॥ २४ ॥

महारजतभित्तिभिः परिवृतो महानीलभू-
र्मयूखनिचयोत्करः[५] क्वचिदहो दरीदृश्यते ।
सहस्रकरभानुभिर्भुवनमध्य[६]संचारिभि-
र्घनान्धतमसोच्चयः किमु विगृह्य बन्दीकृतः ॥ २५ ॥

---

१. L गनगन
२. L भ्युक्ततः
३. L द्वन
४. L सकन
५. L त्क्वरः
६. L मः य

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

प्रहसन् पाशिसंवासपातालं च सदानवम्।
अनेकरत्ननिकरैर्विललास सदा नवम्।। २६ ।।

कैलासवासमपहाय निवस्तुकामा
यत्रास्ति शैलतनयापि सहेश्वरेण।
अम्भोधिजाजनितवाससमीर्ष्ययेव
को नाम भूधरवरं न समाद्रियेत।। २७ ।।

चुम्बनेषु विविधो[१]त्सववन्तः श्लेषसंभ्रमसुखं न विदन्तः।
किन्नरा निहतराहुशरीरं लब्धुकाममनसो[२]ऽभिननन्दुः।। २८ ।।

श्लेषसंभ्रमसुखोत्सववन्त –
श्चुम्बनाद्भुतरसं न विदन्तः।
किन्नराश्तुचतुरास्तुरगास्या
राहुमाप्तुमनसो हरमीजुः।। २९ ।।

क्वचिदपि शुशुभेऽसौ यूथिकावीथिकाभिः[३]
क्वचिदपि कुसुमौघैर्मल्लिकावल्लिकाभिः।
तटभुवमभिरेजे सुन्दरीभिर्दरीभि–
र्विमलसलिल[४]पूरैर्वापिकौघैः पिकौघैः।। ३० ।।

---

१. L.D विधो (drop one वि)

२. D शरीरत्लधुकानमी (?) L शरीरं तधुकीममनसो. The reading लब्धुकाममनसः is also, grammatically speaking, not a very fine construction ('लब्धुकामाः' अथवा 'लब्धुमनसः' इत्येव भवितव्यम्).

३. All the six MSS have the reading वीथिकायूथिकाभिः but G and D indicate the correct order of words with numbers 1 and 2 superscribed on the two words.

४. G drops ल in सलिल

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

क्वचिदपि च वराहः प्रौढमुस्ताप्ररोह-
प्रचुरकवलशीलः शीलयत्यम्बुरोधः ।
मणिकिरणसमूहाद्बिभ्यदभ्यर्णमम्भः
प्रविशति किमु पिण्डीभूय[1] भूयोऽन्धकारः ॥ ३१ ॥

क्वचिदपि च कुरङ्गी शृङ्ग[2]कण्डूयनेना-
नुभवति सुखमुच्चैरच्छकच्छस्थलीषु ।
तरुणहरिणसंघोऽपूर्वदूर्वाङ्कुराणां
कवलनविवृतास्यः कस्य नानन्दकन्दः ॥ ३२ ॥

क्वचिदपि कपिजालं स्वीयकान्ताकपोलं
तरुवरशिखराग्राच्चुम्बितुं लम्बते स्म ।
कुहचिदथ पिशङ्गैरम्बुजानां रजोभि-
श्छुरयति दयितास्यं पाणिनाऽकुञ्चितेन ॥ ३३ ॥

क्वचिदपि करिशावः स्तन्यसंबद्धभावः
स्थगयति चरणाग्रे रेणुमध्ये करेणुम् ।
अथ कथमपि बालस्नेहसंजातपाशा[3]
निजपदमधिकर्तुं नो समर्था बभूव ॥ ३४ ॥

अपि च–

सिद्धकिन्नरवधूस्तनकुम्भोत्सृष्टकुङ्कुमरजोभिरपीतः ।
श्वेततां न विजहौ गिरिराजः स्वं गुणं जहति वै किमु सन्तः ॥ ३५ ॥

---

१. G drops भूय
२. D भृंग
३. D drops पा in पाशा

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

मदजलकणसेकोत्सिक्तकुम्भस्थलेषु
भ्रमदलिकुलगुञ्जापुञ्जसंबद्धकर्णः ।
अनुसरति करेणुं रूषितां रेणुसंघै-
रलसगमनलीलाबन्धुरः सिन्धुरोऽयम् ।। ३६ ।।

तत्र च—

हरिमिव सशङ्खचक्रं वनमालाविभूषितञ्च, शक्रमिव रम्भोपसेवितपरिसरं, कुबेरमिव यक्षानुचरं, वरुणमिव यादोगणसेवितं, हरमिव निर्मलनीरपरिप्लुतं नीरजस्कञ्च, ब्रह्माणमिव मरालवाहनं वितमस्कञ्च, हरभालमिव द्विजराजोपसेवितं, युवतिगणमिव कंकणकलितं, स्वर्वधूकपोलस्थलमिव विचित्रपत्रलताभिराकलितं, गणेशगण्डस्थलमिव गुञ्जदलिपुञ्जमञ्जुलं, महासेनमिव मयूरसेवितं शरवणसंभवञ्च, भानुमिव कोकनदमोदकरं, चन्द्रमिव निष्यन्ददमृतं, हनूमन्तमिव सदागतिसेवितं, शमनमिव जीवनमनोहरं भानुसंतापहरञ्च, कलं कमलं दधदपि[१] कलंकमलरहितं, धनञ्जयमिव वायुसखं, कंसगृहमिव विलसद्बकं, दानवेन्द्रसैन्यमिव सदानवजीवनदं, पाण्डवसैन्यमिव निष्णात[२]सज्जनकुलं, संयमिनीनगरमिव जीवनाशयमराजं,[३] शक्रसदनमिव भूदार-(र)हितम्[४] अमृतसहितञ्च ।

यत्र च—

फुल्लपङ्कजवनीगतालिनां सर्वतो जयति नीलिमा गुणः ।
राजतेऽस्य किमु वस्तुमागतो मूर्तिमानिव रसो महोज्ज्वलः ।। ३७ ।।

---

१. D ददपि
२. D निज्ञात, L विज्ञात
३. D यरामजं
४. All MSS commit here a haplographical error by dropping one र ( भूदार = 1. hog, 2. earthly woman).

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

परिभ्रामं भ्रामं प्रतिकमलमन्वेषितवता
प्रियां प्रेमौत्कण्ठ्यान्[१] नयनविषयं नो कृतवता ।
श्रमात् पातुं[२] वक्त्रे मधु धृत[३]वताऽलोकि सहसा
न पीतं न त्यक्तं मधु मधुकरेणाम्बुजवने ॥ ३८ ॥

दरोन्मीलत्कञ्जावलिललितगुञ्जास्थितिमता
मरन्दौघं[४] पातुं सह सहचरीभिः प्रववृते ।
रतक्लाम्यत्कान्ताधरदलरसं संस्मृत[५]वता
न पीतं न त्यक्तं मधु मधुकरेणाम्बुजवने ॥ ३९ ॥

विकचसरसिजालीलोलनोत्संग[६]संगाद्
विगलितमकरन्दस्यन्दिनो गन्धवाहाः ।
वकुल[७]मुकुलमालानूपनीपप्रसून-
प्रसृतपरिमलालीमुद्वहन्तः प्रयान्ति ॥ ४० ॥

विकचकमलमालाजालमालम्ब्य[८] लम्ब-
ल्ल[९]घुतरचलदोलान्दोलिरोलम्बवृन्दः ।
अनुभवति तदालं लोलकल्लोललोल-
ल्ललितचलित[१०]नालं नन्दना[११]नन्दमुच्चैः ॥ ४१ ॥

---

१. D L कंग्रा
२. D L सा तु
३. L drops त of धृत
४. दौपं K
५. मृन K
६. D omits संग (due to *haplography*) and L the ग
७. लकुल K, मुलमुकुल L
८. D omits माल (has जालम्ब्य)
९. K reads मालंबल्ल (i.e. omits य लम्ब)
१०. चलितचलित K, चलि D
११. D omits नन्दना

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

एवं गव्यूतिभिर[१]संख्यातं देवखातमप[२]श्यत्। ततश्च–

**स सिसाधयिषुः सिद्धिं सिद्धाश्रमपदं गतः।**
**समाधायेन्द्रिगामं साधने मानसं दधे॥ ४२॥**

तस्य च नातिनिकटाविकटभूमौ मुनिवाटमपश्यत्–

देवर्षिराजर्षिसिद्धर्षिकुलसंकुलम्, ब्रह्मसदनमिव नानाशाखिशाखाकलितम्, राजसदनमिव विभूतिभूषितशिशु[३]जनम्, दक्षयज्ञस्थानमिव विद्रुत[४]मृगं सत्योपकलितं च, उद्यानमिव जपासक्तद्विजकुलम्, सर इव कन्दमूलफलाशनद्विजकुलकलितम्। यत्र च मुनिकुलम् अजपासक्तमपि जपासक्तम्, अरामासक्तमपि रामासक्तम् , अबद्धमपि मुक्तिकामम्, अकाममपि मोक्षकामम्।

**चीरवल्कलकरण्डधारिणः क्षीरपाः प्रतिदिनं विचारिणः।**
**शीतवाततपनानुभाविनः सत्तपस्विन इवात्र शाखिनः॥ ४३॥**

यत्र च–

**नकुलैर्विहरन्ति पन्नगाः कलभैः केसरिणः कृपालसाः।**
**वृषदंश[५]कुलैः सदुन्दुरा हरिणा व्याघ्रकुलैर्विचारिणः॥ ४४॥**

---

१. D omits र
२. K omits प
३. All MSS read uniformly षिषु. In D, however, it has later been corrected into शिशु
४. निदभुत K
५. All MSS read दंष

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

अपृथुपृथुकसंघः क्रीडितुं यत्र मृत्स्ना-
विधिहरिहररूपा[१]कारमूर्तीर्विधाय ।
[२]अमलकमलजालैरर्चयित्वा कराग्रैः
परिधृतलघुनासो मुद्रिताक्षो[३] बभूव ॥ ४५ ॥

क्वचिदपि शिशुजालं धैर्यमालम्ब्य कालं
गमयति चतुराशामण्डलं पूरयित्वा ।
ललिततरजपाभिर्वह्निकीलप्रभाभि-
र्दिनकृतिकृतनेत्रं संबभूवोर्ध्वहस्तम् ॥ ४६ ॥

जटामुकुटमण्डिता ललितमौञ्जिबन्धावृताः
कुशाक्षवलयोत्करा ललितकृष्णचर्माम्बराः ।
ब्रुवन्त इह सत्कथाः शतपथार्थतत्त्वाहताः
वृथा नहि नयन्ति ये समयमालयं सर्वथा ॥ ४७ ॥

ततः स क्षितिपालतिलकायमानोऽशुमानंशुमानिव विकासित[४]-सुहृत्पुण्डरीको विनाशितदुर्जनान्धकारोऽन्धकारिचरणबद्धमनाः मनाक् तदाश्रमाभोगविनीतसत्त्वजनदर्शनचित्रितचित्तभित्तिः[५] तदाश्रमदर्शनाह्लादविगत-श्रमोऽपि परिसरललिततरतरुवरतलमलंकारयाञ्चकार । ततस्तदन्तिक-चरमुनिजनशिशुवरचञ्चललोचनाञ्चलचलनचमत्कारमधिगतः । तदा सभयकौतुकैस्तैः समभिसृत्य समस्ततपोभारगुरवो गुरवो[६] विज्ञापिताः—ताताः, कोऽपि शान्तान्तःकरणोऽपि भासुराकृतिः सुरपतिरिव प्रभाभारभासुरोऽवज्रकरश्च, अधनोऽपि धनद इव, अजडपतिरपि प्रचेता इव, असंयमनोऽपि धर्मराज इव,

---

१. रूपाः कार, LDG
२. अमल is an editorial conjecture for कमल which appears twice in all MSS.
३. मुद्रिकाक्षो K
४. शित D
५. Corrected as वृत्तिः in D
६. D omits second गुरवो

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

ललिततरकोमलकरचरणतलाद्यवयवभूषितो भूषितः कोऽपि देववरपरिसरतरुवरतलमलंकरोति। पृथुवेपथुप्रथित[१] पृथुपृथुक[२] जनवचनमन्तः-करणचरमाकलय्य तेषामेकः कोऽपि तमभिसृत्य समवोचत्— भवता भवतापनिर्वृतः को वावनीवृत्परिसरः समजनि? कश्चाकण्ठोत्कण्ठालुण्ठितचित्तवृत्तिर्विरचितः? किंकार्यमार्याः सधैर्यमुपसर्तुमुद्यतास्तरुतलमलञ्चक्रुः?

ततोंऽशुमानपि सदशनांशुवचनमवोचत्—अंशुमदुदितवंशोऽङ्कुरोंऽशुमान्नामाहम्, संततसमाधिधौतमनोमलाः[३] सदार्याः कार्यमवगच्छन्त्वित्युक्त्वोपरराम। ततश्च विनतेन तेन सर्वोऽप्युदन्तः सर्वज्ञेन विज्ञापितः। ततस्तमुदन्तमालोच्य संमुदमाप्नुवन्तः 'चतुरुदधिवलयमण्डितमहीमण्डलाखण्डलः किमप्यपूर्वकार्यमार्यानुचरितं हृदयचरं विधायापूर्वोऽयमतिथिः समागतः' (इति)।

तन्नामश्रवणजनितमहानन्दामृतसरसि मग्ना इव विकचाम्बुरुहावली-[४]ललितविलासलास्यकल्पहास्यकलिताननाश्चमत्कारनिचयपरिचयपरिचीयमानहृदयाः सहृदयास्तदर्थमनवद्यपाद्यमनर्घमर्घममलतर*नानावस्तुनिचयजनितसंपर्कं मधुपर्कं संपाद्यावद्यरहितं जगत्त्रयहितं विमलतरविलसद्गुणगण*सहितं तमभिसृतवन्तः। तदालोकन[५]जनितानन्दमहार्णव[६]परिप्लवमानमानसाः सहसामृतनिष्यन्दकल्पानल्पजल्पैः यशश्चन्द्रिकाप्रकाशितधरणिमण्डलमण्डनायमानं कृतप्रणामं पूरितावनीवनीपकजनकाममानन्दनस्वरूपं भूपं समवोचत्— स्वस्ति समस्तावनीविलासिनीकामुकेभ्यः, स्वागतमस्तु तावत्! इदं पाद्य[७]मर्घ्यमधुपर्कादिकमपाङ्गविलासलास्येनाङ्गीक्रियतामिति, समर्था[८]श्रममण्डलं

---

१. All MSS read प्रथिता
२. D K &L read पृथुपृथुपृथुक
३. माला G
४. लालित K
*—* D omits the whole portion beginning with नाना and ending with गण.
५. लोक्य D
६. माहार्णव DL
७. पापं D
८. I think, we must read here समस्ता-

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

सनाथीविधीयतामिति प्रार्थयामासुः। तत्रसन्नतासन्नतापास्तेन सहैव चञ्चच्चञ्चरीककुलनादानुनादितां स्वकुटीराजिरभुवमाराद्विविशुः, राजहंसाद्यशनयोग्यैरमलैः कन्दमूलफलादिभिः सुरस[१]भोचितगुणैरुपचितं संभोजनाय संभावयामासुः, ललितसल्लतापल्लवैरनल्पतल्पमुपकल्पयामासुः।

ततश्चांशुमान् तैर्विरचितसभाजनः सभाजनोपसेव्यमानचरितः विचित्रचरित्रैरुपरुद्ध्यमानः[२] स्वं निखिलमुदन्तमवोचत्। तैश्चाभ्यधायि— राजर्षिवर्य, तपःसंपादित[३]कल्पवृक्षाः सर्वथा नानाफलानि वितरन्त्येव। किमसाध्यं दुश्चरतपसाम्? तपसैव हरिहरविरञ्च्यादयोऽप्युच्च[४]पदमधिरूढाः। तपसैव शेषोऽप्यशेषां महीं शिरसा समुद्वहति[५]। त्वमपि निजकार्यजातं प्रति कारणतां गतः सन् कालान्तरे पुरुषान्तरेण सिद्धिमवाप्स्यसीत्युक्त्वा[६]सर्वे स्वं स्वं शयनगृहमाविविशुः।

ततश्चान्येद्युः अंशुमानपि तपश्चर्याकरणाय कृतपरिकरः कंजोद्भवदेवप्रसादासादनाय सदनाद् बहिः स्थण्डिलमुपकल्प्य नानाविधदुश्चरतपस्समूहमभ्यस्तवान्। तस्य *च वाचामगोचरत्वादवर्णनमेवोचितम्। एवं द्वात्रिंशत्सहस्रसमाः समकालयन् कालधर्मणा संयुयुजे*। तस्य पुत्रः सकलभुवनद्वीपदीपायमानो दिलीपो नाम सप्तद्वीपां वसुमतीमनुशासयन्—

---

१. The MS D ends here. (end of Folio 19 b).

२. All MSS uniformly read मानो which is grammatically not permissible.

३. संपादिततपः GK, L omits तपः

४. पि उच्च KL

५. This seems to be an echo of the following lines of Tulasīdāsa (*Rāmacaritamānasa*, Bālakāṇḍa, between Dohās 72 & 73) :
तपबल रचइ प्रपञ्चु बिधाता। तपबल विष्नु सकल जग त्राता।
तपबल संभु करहिं संघारा। तपबल सेषु धरइ महिभारा।

६. क्त्वा missing in G

*—* The whole portion begining with च and ending with संयुयुजे is missing in K (a *homeoteleuton*).

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

समीजे बहुभिर्यज्ञैस्स राजा राजनन्दनः ।
प्रशास्य वसुधां कृत्स्नां नन्दनानन्दमन्वभूत् ॥ ४८ ॥

स च अनेकजननार्जितदुर्दैवदुर्विपाकेन राजयक्ष्मणा परिग्रस्तायुः –

इति मनसि विचारं चारयन् सर्वकालं
सगरसुतशतानां तापनिर्वापहेतुम् ।
अथ भवति कथं वा भूतले भूरिगंगा–
चरणमितिनिजान्तर्भावयन् स्वः समागात् ॥ ४९ ॥

॥ इति श्री साहित्यपारावारपारीण-कविताकान्तारकण्ठीरव-
सर्वस्वदानदीक्षाविचक्षण-श्रीमद्दीक्षितबालकृष्ण
सूनुशंकरविरचिते गंगावतरणचम्पूप्रबन्धे
गंगाचरणाङ्को द्वितीय उच्छ्वासः ॥



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## तृतीय उच्छ्वासः



मिलिन्दमण्डलीमण्डिगण्डमण्डलमण्डितम् ।
वितण्डतुण्डमवतादतर्क्यं तुन्दिलं महः ॥ १ ॥

प्रेक्षणीयार्थमपरं प्रेक्षकार्धवपुःस्थिरम् ।
दूरीकरोतु भवतां भवतां भवताण्डवम् ॥ २ ॥

पूतनामारणख्यात[1]स्तवाय भवतां मुदा ।
गीतनामारणप्रीतः शिवाय भवतां सदा ॥ ३ ॥

(शरबन्धः)

अस्ति समस्तावनीवनीपककुलदारिद्र्यमुद्राविद्रावण[2]वर्धितयशःसमुद्रः, समुद्रसमुद्रामुद्रितमहीमण्डलाखण्डलाखण्डनप्रबलप्रतापमार्तण्डप्रविकासितसुहृत्पुण्डरीकः, पुण्डरीकाश्वमेधादिसप्ततन्तुसन्तर्पितसुरलोकः, लोकरक्षणदीक्षाविचक्षणः, क्षणदापतिरिव कुमुदवनसुखहेतुः संसारसागरसमुत्तरणसेतुः संभावितरणभूमिः, राम इव शुभलक्ष्मणान्वितः, श्रीकृष्ण इव सत्यभामासमन्वितः, जामदग्न्य इव खण्डितवैरिसहस्रबाहुः, भरत इव रामानन्दजनकः, महावराह इव संभृतभूमण्डलः, भीष्म इवानन्दितसागरः, सागरशायीव[3] अनन्तनागा[4]श्रयः, श्रीपतिरिव विशेषभोगप्रियः, भीम इव नाशितदुर्योधनः, अवृकोदरोऽपि भीमसेनः, युधिष्ठिरोऽपि न पाञ्चालीप्रियः, धृतराष्ट्रोऽपि न दुःशासनरतः, धनञ्जयोऽपि न कृष्णवर्त्मा,

१. इत्यातः (for ख्यातः), K
२. विशवण K
३. शाई G
४. त्रागा K

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

असोमोऽपि बुधप्रियः, अगुरुरपि वाचस्पतिः, प्रह्लादोऽपि न जनकदुःखदः नृसिंहप्रियश्च, सदाशिवोऽप्यहिमकराश्रयः नाशितान्धकश्च, सदागतिरप्यसदागतिः काव्यप्रियोऽपि न दैत्यराजः, धनदोऽपि न कुबेरः, प्रचेता अपि न [१]जडाधिराजः, धर्मराजोऽप्यतीक्ष्णदण्डः, महिषी[२]प्रियवाहनश्च, वज्रकरोऽपि न रम्भाप्रियः, सोमपोऽपि न विधुंतुदः। यश्चाकुञ्चितजरालसगतिरपि कुञ्चितजरालसगतिः, असंयोगपदाभिभूषितोऽपि संयोगपदाभिभूषितः, अपूर्वसुरशत्रुरपि अपूर्वसुरमित्रम्। यस्य च—

**क्रूरशूरवरत्रस्तः समस्तः प्राद्रवद्रणे।**
**करनीरधरक्रूर-शरपूरसरः परः ॥ ४॥**

**(चामरबन्धः)**

**भगीरथो नाम महीमहेन्द्रो मही[३]महेन्द्रार्चितपादपीठः।**
**सप्ता[४]र्णवैकावनिचक्रवर्ती मोक्षोऽपि यस्यास्ति न दूरवर्ती ॥ ५ ॥**

**तुरङ्गमेधा[५]वभृथे[६]रघूणां पुरः पुरस्तात् श(स)रयू पवित्रा।[७]**
**गङ्गावतारोत्सवदत्तचित्तो मेध्यामयोध्यामथ सोऽध्यवात्सीत् ॥ ६ ॥**

यस्यां च प्रजाः अनेककोटिवित्ताः धनुश्च कोटिद्वयोपेतं, भुजङ्गत्वं सर्पेष्वेव, पाल्लविकत्वं वृक्षेष्वेव, वक्रत्वं धनुःष्वेव, बहुलोहत्वम् आयुधेषु तार्किकेषु च, या च सपारिजातापि अपारिजाता—

---

१. तडा K
२. महिवी K
३. L drops मही
४. सपार्ण K
५. L drops मे
६. थै LK
७. शरपूवित्र K

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

यन्मन्युभागानद्यापि भुनक्ति स दिवस्पतिः।
मेध्यायोध्या पुरी भाति स्वर्गतोऽपि गरीयसी॥ ७॥

सर्वतः सलिलं भाति वारिजैः सह सारवम्।
क्रीडन्ति यत्र तरुणा मुञ्चन्तः सहसा रवम्॥ ८॥

या च विश्वकर्मणा विश्वकर्मणाऽव्याकुलमनसा मनसापि कर्तुमशक्या। तस्यामधिवसन्—

कदाचित् समाहूय मन्त्रिप्रधानानपृच्छत् कथा विस्तरे पूर्वजानाम्।
उदन्तं मुदंतापसंशोचमानः( ?) समाकर्ण्य वैवर्ण्यमन्यच्चकार॥ ९॥

अहोऽहं महामोहदोलाधिरूढः कुलाचारहीनो मदाद्वैभवेषु।
प्रमत्तोऽस्म्यखर्वेण गर्वेण युक्तः सुपर्वेशशर्वं समाराधयिष्ये॥ १०॥

मुनेः कोपतो लोपभावं प्रपन्नाः न पुन्नामतस्त्राणमेषां बिभर्मि।
वृथा पुत्रतापत्रपाहेतुरद्य क्षपानायकस्येव रंकुः कलङ्कः॥ ११॥

अतोऽहं ततो हन्त दुःखाभिभूतान्निजान् पूर्वजान् पङ्क्तः पावयिष्ये।
अहो देवगंगा तदङ्गारकौघं कथं पावयेदित्थमर्थाकुलोऽभूत्॥ १२॥

तदा दीनबन्धुर्दयासिन्धुरीशो[१] मनीषां विशेषादनोदीन्मनःस्थाम्।
तपोऽहं चरिष्ये हठात् सागराणां महातापनिर्वापणायाथ[२] घोरम्॥ १३॥

इदं कार्यं धैर्यान्निजमनसि कृत्वा नरपतिः
प्रतीतस्त्रैलोक्ये त्रिभुवनसमुद्धारहितकृत्।
समेत्यामात्यानामनुमतमतः कार्यनिवहं
वहन् पुण्यारण्यं समगमदथो भूमितिलकः॥ १४॥

---

१. रीषो G

२. याद्य KGL

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

ततश्च—

गोकर्णतर्णकालीढ-गोकर्णकुशराजितम्।
गोकर्णमगमत्तीर्थं गोकर्णमुनिनिर्मितम्॥ १५॥

तच्चानणिमगुणगणनीयपुण्यनिचयोद्भासितागण्यमुनिजनसंकुलमाश्रम-मण्डलमपश्यत्। ब्रह्मसदनमिव परम[१]हंसाकलितं श्रुतिगुणाभ्यासपरं च, शक्रसदनमिव विविधविबुधभूषितं, हरमिव शिवासक्तचित्तं नाशितमनोभवं च, सुरकुलमिव सेवितगुरुं, गुरुगृहमिव सकचं ताराभ्यासपरं च, उपवनमिव सजपं वर्जितकण्टकं च, विधुमण्डलमिव सकलकलं हरिणसहितं च, यमसंयमसहितमपि यमसंयमरहितं, योगसहितमपि अयोगं, रामाराधनपरमप्यरामाराधनपरं, विभूति-भूषितमपि अविभूतिभूषितं, कुशासनस्थितमपि न कुशासनस्थितम्। तत्र च केचन दन्तोलूखलिनोऽपि न पक्षिणः, केचन क्षीरपा अपि न वत्साः, केचन वाताशना अपि न भुजंगाः, केचन शीतवातवर्षासहा अपि न गिरयः, केचन भूमिविवरचरा अपि न अजगराः, नक्तभोजिनोऽपि न कौशिकाः, केचन अभ्यस्तसमाधयोऽपि आधिरहिताः, केचन मरीचिपा अपि न जीवंजीवाः, केचन भवासक्ता अप्यभवासक्ताः। यत्र च—

आकण्ठसलिले मग्ना भृङ्गमालापवर्तिनः।
तपस्विन इवाभान्ति पद्मा(ः)[२] पद्माकरेषु वै॥ १६॥

तत्र तैस्तपस्विभिरभिनन्दितोऽभ्यर्हितस्तपस्तप्तुमनाः, [मनाक्][३] परितुष्यन्मनाः, स्वर्धुन्यवतरणचिन्तया चिन्तालताततिसंतन्यमान-मानससमूहस्तदाश्रमभूमौ स्थण्डिलमुपकल्प्य नानाविधतपस्समूहमभ्यस्तवान्। तत्र च विगतसमाधयोऽविगतसमाधयस्तदद्भुततरतपः समवलोकनजातविस्मया विस्मया अपि सकलजडजीविजनसमुद्धारकारणमवलोचयन्तः करुणया विलसन्तः सन्तः सस्मितमवोचन्—

---

१. परहंसा G

२. The use of the word पद्म (n.) in masculine is very unusual.

३. Supplied by The Editor.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

त्रैलोक्यवासिजनतायमतापभीति-
निर्वापणाय कृतभूरितरप्रयत्ने ।
भूपे तपस्यति सहस्रसमाः जनानां
पुण्योच्चयेन परितुष्यतु पद्मसद्मा ॥ १७ ॥

तस्मिन् तपस्यति महीपवरे वरेण्या
देवा शरण्यमथ तं शरणं समीयुः ।
पद्मोद्भवं भयविचित्रितचित्तमारा-
दानम्य पादयुगलं कथयाम्बभूवुः ॥ १८ ॥

देवा भयं न भवति क्षितिपालपुत्रात्
संभावनीयमिदमित्थमनर्थहेतुः ।
आनन्दकारि भवतां भविताऽचिरेण
गंगावतारविधिना विधिनाभ्यवादि ॥ १९ ॥

आगम्यतां सह मयैव निजान् विमाना-
नारुह्य सत्वरतरैरितरैः स्ववाहैः ।
स्वीयं विमानमधिरुह्य मरालबाल-
संलालितं[1] तमनु तत्कृपया जगाम ॥ २० ॥

दृष्ट्वा पुरः स्थितमथोग्रतपःसमाधि-
मारूढमूर्ध्वकृतबाहुमलोलचित्तम् ।
सम्यग् जटातटनिषक्तकपोतपोतं
भोगीन्द्रकञ्चुकधरं धरराजतुल्यम् ॥ २१ ॥

---

१. संचालितं ?

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

संचालितं प्रचलभूरिपिपीलकौघैः
संवर्धिनाकुमयदेहधरं धराभम् ।
दन्तोत्करप्रचलदंशुसमूहमारात्
तं प्रत्यवोचदचिरेण चिरं[१] विरञ्चिः ॥ २२ ॥

राजन्यडिम्भ तपसा परितोषितोऽह-
मन्यैर्दुरापमपि याहि मम प्रसादम् ।
यत्ते मनोरथगतं[२] रथगं तदाशु
भूयो भविष्यति वद प्रकटं पटीयान् ॥ २३ ॥

इत्थं निगद्य गगनस्थमरालबाल-
संचालितः परिशिर्षि च कुशोदकेन ।
सोच्छ्वासचित्तधिषणाधिगतप्रमोदः
स्वस्थो नभःस्थितमजं कलयाञ्चकार ॥ २४ ॥

देवं प्रणम्य मनसा सहसादरेण
धातुश्चरित्रमभिनन्द्य स नन्द्यमानः ।
भक्त्यानुरागकलया सलयाभियुक्त्या
प्रेमाश्रुगद्गद[३] गिरा सुरवर्यमैडीत् ॥ २५ ॥

सदाकारणं कारणं[४] तत्त्वजातेर्निराकारसाकारमात्रस्वरूपम् ।
असत्सत्परं तत्परं तत्त्वमाद्यं विरञ्चिं प्रपञ्चैकबीजं प्रपद्ये ॥ २६ ॥

---

१. चरन् G
२. K has corrupted this expression into यत्तो मतनरन्यवने (?)
३. वाहद (for गद्गद) L
४. Both L and K read the word कारणं thrice which is metrically not possible.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

कुतो जातमात्रं किमर्थं कमर्थं समर्थो न संसाधितुं चिन्तयानम्।
भ्रमच्चक्षुषं वक्त्रचातुष्कमाप्तं विरञ्चिं प्रपञ्चैकबीजं प्रपद्ये ॥ २७ ॥

कदाचिन्मुदा चारुवृन्दावनेऽन्तस्तटिन्यास्तटे गोपगोपालबालम्।
भ्रमात् स्वं पुरं नेतुमुद्युक्तकामं विरञ्चिं प्रपञ्चैकबीजं प्रपद्ये ॥ २८ ॥

अहार्षीद्धरिं गोपगोपालरूपं तदापश्यदात्मस्वरूपं सरूपम्।
मुदा संस्तुवन्तं भ्रमभ्रंशहेतोर्विरञ्चिं प्रपञ्चैकबीजं प्रपद्ये ॥ २९ ॥

यदाराधनासाधनासावधानाः सदासिद्धगन्धर्वदेवादिसंघाः।
समाधाय चित्तं तपश्चर्तुकामाः विरञ्चिं प्रपञ्चैकबीजं प्रपद्ये ॥ ३० ॥

सदा शारदानारदाद्यैर्मुनीन्द्रैर्लसद्गद्यपद्यैरभिष्टूयमानः।
उपास्ते समस्तं यदाधाररूपं विरञ्चिं प्रपञ्चैकबीजं प्रपद्ये ॥ ३१ ॥

हृदा वेदमावेदयन् यद्धृदिस्थो मुखान्नैगमं संघमाविश्चकार।
तदर्थावबोधादवाप्तैकविश्वं विरञ्चिं प्रपञ्चैकबीजं प्रपद्ये ॥ ३२ ॥

तपस्यन्त्यकामाः सकामाश्च केचित् कदाचित् कथञ्चित् कुमारादयोऽपि।
मनोजातमात्रं ददानं शरण्यं विरञ्चिं प्रपञ्चैकबीजं प्रपद्ये ॥ ३३ ॥

इति—

पितामहमभिष्टूय प्रपितामहशोकतः।
उद्धरामि विधे यत्नाद् वरदानं विधेहि मे ॥ ३४ ॥

सहस्रकरवंशोऽयं सहस्रकरभुक् क्षितौ।
आकल्पं कल्पतां कल्पो स्वल्पोऽप्येष वरोऽस्तु मे ॥ ३५ ॥

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

ततस्तदस्त्विति अनवरतपवित्रतरनिगमोद्गिरणपूततरया[१] अनुरागकलाकलितललित[२]वचनरचनये[३]त्युदीर्येदमवादीत्—

त्रिदिवान्निपतन्तीयमगङ्गाञ्च रसातलम्।
जवान्नेष्यति गङ्गेयं कस्तां धारयितुं क्षमः॥ ३६॥

ब्रह्माण्डधारणे शक्तः शक्तो यः परिपालने।
महालयविधौ शक्तः स गङ्गाधरणे क्षमः॥ ३७॥

महत्पदेन खचितो महदाद्याश्रयः सदा।
तेन[४]देवाधिदेवेन विनान्यं न विलोकये॥ ३८॥

अतो दुःसाध्यतपसा[५] सहसा मनसा हरम्।
आराधय धराधीश[६] स ते कार्यं विधास्यति॥ ३९॥

इति वाचमवोचन् वै जगाम जगतां पतिः।
गङ्गामाज्ञप्तुकामेन साकं नाकं सुरोच्चयैः॥ ४०॥

ततश्च विरञ्चिविचित्रपवित्रवचनरचनां चेतसि[७] समालोचयन् कठिनतरतपःसमासादन[८]समासादितस्थिरचित्तः चिन्ताव्रतिततति[९]मवगणय्य दुश्चरतरतपः समारब्धवान्।

---

१. तरवा K
२. कलालकलित K
३. L drops रचनया
४. तेत्र K
५. दुःसध्यतगुसा K
६. धराधीप L (which shows that the exemplar of this MS orignially had धराधीष)
७. K has a corrupt reading रत्रगोनति for रचनां चेतसि
८. Did the author intend to use here the expression संपादन ?
९. K omits the word तति

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

यत्नात् शुद्धतरं तदैकचरणाङ्गुष्ठेन भूमीतलं
विष्टभ्याशु सहस्रभानुचरणे दत्तोर्ध्वदृष्टिश्चिरम्।
मुक्ताहारहरप्रसादनपरः पूर्णं शरत्सम्मितं
कालं बालमृणालकोमलवपुः क्षत्राङ्कुरोऽकालयत्॥ ४१ ॥

अथ महारथभगीरथमनोरथपरम्परामधिकलय्य तत्कठिनतरतपसा समासादितचित्तचञ्चलतालताप्रसरः निज'दयालुवर'विरद[१]विस्खलनभय-भ्रान्तमनाः मनाङ् मनःप्रियां प्रियां समवलोकयन्नवोचत्— 'प्रिये, रघुवंशप्रदीपदिलीपसूनुदुश्चरतरतपसा समासादितचित्तोद्वेगवल्लरीवलितोऽहं तदद्भुततरवरप्रदानाय सत्वरतरमुपसर्पामि, तत्[२] प्रमथगणाः स्वानि स्वानि वाहनान्यधिरुह्य मामनुसरन्तु' इत्युच्चार्य प्रतिदिन[३]मानन्दिनं नन्दिनमारुह्य तम-भिसर्तुमनाः प्रमथगणैर्गगनाभोगपरिसरमापूरयन् समेत्य दिगम्बरो-ऽप्यम्बरस्थस्तमवोचत्—

राजन् सहस्रकरवंशकरीर वीर
धीरोऽसि दुश्चरतपः स्वसमाधियोगात्।
यत्ते मनोऽभिलषितं भविताऽधुनैव
नाप्राप्यमस्ति भुवनेषु मयि प्रसन्ने॥ ४२ ॥

तमपश्यद् वृषस्कन्धो वृषसंस्थं वृषा[४]कपिम्।
खस्थं स्वस्थ[५]स्तदालोकादानन्दस्यन्दतुन्दिलः॥ ४३ ॥

---

१. विरुद is the actual Sanskrit word herefor. Has the author been influnced by its Hindi form (cf. दीनदयाल बिरद संभारी_Tulasīdāsa)?

२. न तु (for तत्) K

३. रिन (for दिन) L

४. वृशा LK

५. स्वस्थं खस्थः K. The reading accepted in the text has been supplied by GL.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

ततश्चानवरततरध्यानधारणादिकलितसमाधिसमासादितस्मरहरचरणारविन्दविगलन्मकरन्दरसासारसेवनविनीतपरिश्रमश्रमनिर्गततमसा तमसाध्यं कपटयोगिनां प्रचुरतरसमुल्लसत्प्रेमलताललितलास्यसमाकुलितमनसा सहसा प्रणम्य भक्त्युद्रेककलया लयान्वितपदयाऽनेकजन्मार्जितसुकृतपुण्यवाण्या स्तोतुमुपचक्रमे—

हरिब्रह्मशक्रादिभिः स्तूयमानं
यमानन्ददं[1] कल्पपर्याप्तिकाले।
कलां कोमलां वैधवीं धारयन्तं
जगत्शंकरं[2] शंकरं तं प्रपद्ये॥ ४४॥

अकामं सकामं सदा पूरयन्तं
सदा कामदं कामदम्भापहारम्।
सुराणामभीमं सुभीमाभिधानं
जगत्शंकरं शंकरं तं प्रपद्ये॥ ४५॥

धराधारगेहं धराधारदेहं
दधद्वामदेहं सदा वामदेहम्।
सदा काशिकाकाशिकामप्रपूरं
जगत्शंकरं शंकरं तं प्रपद्ये॥ ४६॥

---

१. यपाददं K

२. No MS makes a Saṃdhi between त् and शं. It is significant that the author deliberately avoids the saṃdhi into च्छं here in order to lay stress on the word शं (welfare) in the name of शंकर and to bring out its meaning more clearly (perhaps also due to preference for alliteration).

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

अरूपं परब्रह्मरूपस्वरूपं
गुणातीतमाद्यं गणातीतशोभम्।
गणेशानसूनुं गणेशानमारा-
ज्जगत्शंकरं शंकर तं प्रपद्ये॥ ४७॥

पुरारातिभूतं पुरारातिभूतै-
र्हरन्तं च मन्युं[१] समन्युं प्रशान्तम्।
विरञ्च्यादिभिः स्तूयमानं विमानं
जगत्शंकरं शंकरं तं प्रपद्ये॥ ४८॥

भुजङ्गेश[२] भूषाविशेषाभियुक्तं
भवानीपरिष्वक्त[३] वामार्धभागम्।
भवानीतिपीडाहरं भासुराभं
जगत्शंकरं शंकरं तं प्रपद्ये॥ ४९॥

सदा पादपङ्केरुहासक्तदेवा-
सुरानीकभृङ्गावलीसेव्यमानम्।
अयोगं सदा योगयोगाभियुक्तं
जगत्शंकरं शंकरं तं प्रपद्ये॥ ५०॥

दयासागरं सागरं कण्ठदेशे
शरीरे शरीराशराणामगम्यम्।
हिमानीसुतानीयमानैकमानं
जगत्शंकरं शंकरं तं प्रपद्ये॥ ५१॥

---

१. प्रन्युं L
२. गेष GKL
३. श्वक्त G

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

इति स्तुत्वाऽन्यदपि—

भूधरभूभाभासुर भगवन् भविकस्य भाजनीभूत।
भवभयभावितभावे भव भव भव्याय भूयसे भूयः ॥ ५२ ॥

शंभुः शं भूसुराणां निजभजनजुषामाददद्दीनदीने
दायं दायं दयौघं[1] गिरिवरवसतिः सर्वदानन्दिनन्दि(:)।
कामं कामं दहन्[2] यो रतिविरतिकरः कामिनां कान्तकान्तं
सोमः सोमार्धधारी स दहतु दुरितं नाकपाली कपाली ॥ ५३ ॥

शेषाशेषानं[3] नौघो[4] च्चलबहुरसनागेयनामायनामा (°प्यनामा)
पद्मा पद्मासनोऽपि स्तवनकृतरुचिर्गोविचारी विचारी।
वामां वामाङ्गसंस्थां[5] रचयति बहुधा चारुदेहोरुदेहः
सोमः सोमार्धधारी स दहतु दुरितं नाकपाली कपाली ॥ ५४ ॥

वारी वारीभदाने प्रभवति हरितां भासमानः समानः
स्वेषु स्वेषूद्यदग्रं हरिवसतिरभूत् सर्वदान्यो वदान्यः।
स्वामी स्वामीव हन्ता सुरसरिदिव यन्नीलकान्तालकान्तः
सोमः सोमार्धधारी स दहतु दुरितं नाकपाली कपाली ॥ ५५ ॥

---

१. दवीधं K
२. दुहन् (which is also a good and plausible variant reading) K
३. षेषाषेणा G
४. नवौघे K नयौघो L
५. K corrupts the reading into वगंग वामां मसंस्थ

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

त्वयि प्रसन्ने देवेशे[१] देवेशेच्छित[२]दायके।
पुण्योच्चयैर्मेदुरापा[३] मे दुरापा कथं भवेत्॥ ५६॥

इति स्तुत्वा धराधीशो धराधीशसुतापतिम्।
विरराम तदा मन्दं गिरिशो गिरमाददे॥ ५७॥

स्थिरोदारादारां विमलतरनारायणपदात्
पतन्तीं तद्धारां प्रचुरतरमारात् स्वशिरसा।
धरिष्येऽहं योगात् प्रकटितजटाजूटविहरां
दिशां हाराकारां हिमगिरिविदारां जवभरात्॥ ५८॥

हिमशिखरिशिखाग्रं[४] शेखरेन्दुं निबद्ध्य
प्रचलित इह[५] यत्नादर्धनारीश्वरो[६]ऽपि।
प्रमथगणसमूहैस्सार्धमर्धेन्दुमौलिः
समवददिति देवागच्छ (देव्यागच्छ) मच्छासनेन[७]॥ ५९॥

अथ महारथधुरन्धरः स्मरहरसंप्रसादसमासादितामन्दानन्द-संन्दोहतुन्दिलितचित्तो विदलितचिन्तानलज्वालजालः समुल्लसत्प्रमोदपंफुल्ल-मानमुखपुण्डरीकः पुण्डरीकाश्व[८]मेधादिसप्ततन्तुविरचनावाप्तफलसमूहः समूहोल्लसितस्वमनसा सहसेति चिन्तयामास—

---

१. देवेषे G
२. देवेषेक्षित G देवेशेक्षित LK
३. Contrary to the convention, the author describes here the Ganges as having blue waters (मेदुरापा).
४. शिखाग्रे would perhaps give a better sense.
५. यिह (for इह) G
६. वारीश्चरो K
७. मच्छ मछस्तेन K
८. काश्र K

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

अंशुमन्नृपतपःपरिणामैः शंकरः सममशंकरणोत्कः।
यद् बभूव रविवंशजपुण्यारण्यकल्पतरुभिः फलितं तत्॥ ६०॥

इति चिन्तयमानो मानसोल्लाससंतोषितसकलेन्द्रियनिवहो बहोः कालादाप्तपरिपूर्णमनोरथः सकलमुनिवर्यधुर्यैः संस्तूयमानो मानोन्नतकन्धरः समिहिकन्धरं लोचनालोचनाय तैः सार्धमर्धेन्दुमौलिस्मरणसंजातपुलको विपुलेन कालेनाभ्यगच्छत्। तत्र च तुहिनगिरेरुपत्यकाधित्यकापरम्परामधिरुहन् बालकण्ठीरव इव स्मरहरहरसमासादितशिखरिशिखरमपश्यत्। एतस्मिन्नेवावसरे सकलसुरसिद्धसमूहैरनुगतो सस्वरेण वचसा सुरसिन्धुं समाहूयाचिरतो विरञ्चिरपि सुचिरकालमनीषितं सकलसज्जनकुलाभिलषितमजिज्ञपत्—

शून्यं पुरं मम हरस्य हरेर्हरेश्च
सौख्याय नो भवति नो जनताभ्युपैति[1]।
भूयो भवार्णवभवैर्भवभक्त्यभावै[2]-
र्वास्तव्यतामगमदाशु पुरी यमस्य॥ ६१॥

तस्मादुपैहि वसुधां हि सुधा[3]नुकारि-
वारां गणैर्गमय शक्रपुरादिलोकान्।
लोकानलोलमनसः कलिपङ्कजाले
कालेन पूतमनसः सहसा विधेहि॥ ६२॥

---

१. ध्युपैति K

२. भक्तिहीनैः G, भक्त्याभ्रान्तैः K. The reading accepted in the text has been supplied by the MS L (weightage for alliteration!)

३. The scribe of G later miscorrected this reading into स्वधा which hardly makes any sense and disturbs the metre.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

अष्टांगयोगकलया सलयैः समाधि-
योगैस्तपोभिरशनादिविवर्जनेन ।
शुद्धिस्तथा न भवती[१] भवतीव्रताप-
निर्वाप[२]कारिघनवारिनिषेवणेन ॥ ६३ ॥

तत्र प्रयागमधितीर्थनृपं ततोऽनु
वाराणसीं समुपयाहि पुरं पुरारेः[३] ।
तस्योपकण्ठमुपभूषय भूरिवारि-
जालेन शंकरललाटमिवेन्दुलेखा ॥ ६४ ॥

भवभवभयभाजां यद् ददातीह पुंसां
नवजललवसेवा सर्वदेवाधिपत्यम् ।
किमु भवति पराकैः कृच्छ्रचान्द्रायणाद्यैः
क्रतुवरहयमेधैर्वह्निभिः किं समेधैः[४] [समिद्धैः ?] ॥ ६५ ॥

यमसदनगतानां नारकैराहतानां[५]
सगरसुतशतानां देहभाजां यशांसि[६] ।
ललिततरमवन्या याहि वन्याप्रदेशं
रचयितुमिह धन्या का त्वदन्या चकास्ति ॥ ६६ ॥

---

१. Is it a metrically unavoidable lengthening or भवति of has it been used in the sense of भवत्याः as a first component of a long compound ending in निर्वापणेन (in which case it should rather have been भवत्) ?

२. परिवाप **K**

३. पुरारिः **K**

४. This is the reading supplied uniformly by all the MSS. I guess, it is a corruption for समिद्धैः caused probably by the preceding हयमेधैः which occurs at the caesura (यति).

५. राहुतानां **K**

६. देहभाय शान्ति **G**

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

जटाटव्यां जलोत्पीडैस्त्वां पतन्तीं त्रिविष्टपात्।
अष्टमूर्तिधरः शंभुरकष्टाद्धारयिष्यति ॥ ६७॥

इत्युदीर्य गगनस्थसुरादीनभ्यधादचिरतोऽपि विरञ्चिः।
व्योमयाननिवहानधिरुह्य त्वर्यतां सुरधुनीमनुगन्तुम्॥ ६८॥

गंगावतारचरितान्यचिरान्नि[१]बध्य
गायन्तु मञ्जु सुरकिन्नरसिद्धवध्वः ।
कल्पद्रुमावनितले सविलासलास्य-
हास्यास्यकम्पनपरात्पर[२]सौख्यभाजः॥ ६९॥

स्वर्लोकवारवनिता मिलिता दरेण
सन्मंगलानि भुवि गाङ्गमने विदध्युः[३]।
नित्यं नवं नवमहो जनमाप्तुकामा
वामा भवन्तु भुवनेषु मनोऽभिरामाः॥ ७०॥

पुष्पोत्करानवचिनोतु वधूसमूहो
ग्रथ्नन्तु दाम गुणधामविधानदक्षाः।
स्वीयान् विमाननिवहानवसज्जयन्तु
सज्जीभवन्तु सुरसिन्धुगमावलोके॥ ७१॥

---

१. चरितानि चिरान्नि° G (which is equally acceptable)

२. कम्पनपराः परसौख्य K, कम्पनपरां परसौख्य L

३. विदुस्थुः K, missing in L.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

शून्यानि यानि भवनानि सुशोधयन्तु
कुर्वन्तु चारु[1] रचनाश्च तथोपकार्याः ।
गंगागमेन भुवि भूरिजनोऽधिगन्ता
तेभ्यः स्थलानि रचयन्तु सुराः समन्तात् ॥ ७२ ॥

वीणामृदङ्गपणवानकगोमुखेभ्यो
ढक्कारवः[2] समभवद् बुधदुन्दुभिभ्यः ।
इत्थं ध्वनिः समभवत्तुमुलस्तदानी-
मानीयतां स्ववहनाय विमानवर्गः ॥ ७३ ॥

परिवहभूमिं त्यक्त्वा परिवह मार्गं हिमाद्रिशिखरस्य ।
परिवह मुक्ति लोके परिवह संतोषमीशनगरस्य ॥ ७४ ॥

वाराणसीविविधतीर्थविलोकनोत्का
सोत्का बभूव सुरसिन्धुरपि क्षणेन ।
पद्मोद्भवप्रकटवागनुनोदनेन
सज्जीबभूव जडजीवनिमज्जनाय ॥ ७५ ॥

अथ भगीरथभूमिपुरन्दरो
दरवरोज्झित[3] मानससुन्दरः[रे ?] ।
हिमगिरेः शिखरे समलोकयत्
स्मरहरं हरमिन्दुसमुज्ज्वलम् ॥ ७६ ॥

---

१. रुचो K
२. K has a totally corrupt reading at this place (इन्द्रनारम्म ?).
३. झित (ज्झित) GV, सित K, शित L, षित (= उषित) could also go well with the text.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

क्रुद्ध्यच्छ्रीकपिलर्षिलोचनपुटाविर्भूतवह्निस्फुटा [ट-]
ज्वालाभस्मितसागरावनिभृतां संपूरिताशावटा[१]।
शंभोः[२] प्रौढजटाटवीषु विकटावासोद्भवत्संकटा
मन्नेत्रे प्रकटास्तु भक्तिनिकटा गंगातरङ्गच्छटा ॥ ७७ ॥

सगरसुतशतानां तापनिर्वापहेतुः
परिसरति कदा मे लोचनालोचनेषु ।
हिमनगवरशृंगोत्सङ्गसंसर्गभङ्गः
कथमपि[३] सुरगङ्गोत्तुङ्गरिङ्गत्तरङ्गः ॥ ७८ ॥

तदानीं तुहिनशिखरि[४]शिखरमवभासयन् चन्द्रशेखरोऽपि—

हिमाचलेन्द्रकूटाभं जटाजूटं विधाय सः ।
बहुयोजनविस्तारमाह्वयत्तां तरंगिणीम् ॥ ७९ ॥

बहुयोजनविस्तारां तारापतिकरोज्ज्वलाम् ।
धारां व्योमतलाधारां कृत्वा खान्नि[५]पपात सा ॥ ८० ॥

भ्राम्यन्मन्दरकन्दरोच्चलपयो डिण्डीरपिण्डैरिव
प्रोद्यच्छारदशर्वरीश्वरकरोद्गारप्रकारैरिव ।
गङ्गोत्तुङ्गतरङ्गरिङ्गणचमत्कारैर्नभोऽभूत्तदा
नानाभूरिजनुर्भवैर्भवभृतां पुण्यप्रकाशैरिव ॥ ८१ ॥

---

१. वता G
२. शंभो G
३. मवि L
४. शिरि G
५. खाभि G

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

श्रीपतेश्चरणपङ्कजजन्मा माकरन्दनिकरो यदि नेदृक्।
तत्कथं परमहंससमूहैः सेव्यते सुरसरिज्जलसङ्घः ॥ ८२ ॥

जटाजालच्छन्ना लघुशफरमालेव तरला
बहिर्गन्तुं नैशीद्[१] गतनिजरया तद्गतभयात्।
तदा भ्रामं भ्रामं शिथिलितशरीरा श्रमवशात्
बहुं कालं गंगाऽगमयदवलम्ब्य स्मरहरम् ॥ ८३ ॥

लसत्कनकपिंगटा[२]भिरभितस्तदा धूर्जटे-
र्जटाभिरभिटोपितं किमु विभाति गाङ्गं पयः।
कथं किमु परीवृतं परिधिना विधोर्मण्डलं
लसत्कनकपिञ्जरे किमु मरालबालोच्चयः ॥ ८४ ॥

किमु कनकलताभिरावृतः किं दवदहनोज्ज्वलकीलमालया वा।
किमु गुरुमणिभिस्तुषारसानुर्लसति जटासु शिवस्य गांगमम्भः ॥ ८५ ॥

बहुतरदुरदृष्टैर्दृष्टमत्रापि मेऽद्य
स्मरहरणकपर्दामर्दिता यत् स्थिराऽभूत्।
अथ कथमहमर्थं[३] साधये लुप्तसंज्ञः
स्तवनरचितशुद्धिर्बुद्धिरागान्नृपस्य ॥ ८६ ॥

कामधेनुभवैश्छन्दोविशेषैः सविशेषतः।
स्तुवेऽहं कामशमनं स्वीये(स्वीयैः) कामदुघां प्रियम् ॥ ८७ ॥

---

१. नैषीछ KL. The MS G also orignially had this reading which was however later corrected into नैशीद्

२. पींगटा G, पिंगटा = पिंगला

३. कथमसमर्थं K कथमसमर्थः L

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

इति विविधविकल्पाकल्पनानल्पजल्पैः-
र्लघुतरमथ कालं चालयद् भूपबालः ।
निजमनसि विधाय प्रौढवारौघगंगा-
चरणपरिचयार्थं चन्द्रचूडं ववन्दे ॥ ८८ ॥

॥ इति साहित्यपारावारपारीण-कविताकान्तारकण्ठीरव-
सर्वस्वदानदीक्षाविचक्षण-श्रीमद्दीक्षितबालकृष्ण-
सूनुशंकरविरचिते गंगावतरणचम्पूप्रबन्धे
गंगाचरणाङ्कस्तृतीय उच्छ्वासः ॥



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# चतुर्थ उच्छ्वासः

श्री गणेशाय नमः ॥[१]



प्रतिदिवसमनङ्गारातिमुख्योत्तमाङ्गा-
भरणकमलसंगा वारिधावुत्तरङ्गा ।
शशिधवलभुजङ्गाधीश[२]वर्णोत्तमाङ्गा
प्रभवतु मम भूयः पापभङ्गाय गङ्गा ॥ १ ॥

सदावरं परं दयाधरा-सुरा-सदा-स्मरम् ।
कृपा-शिवा-वरा-पराभवं चलं स्तुमः कदा ॥ २ ॥

दान्तं वन्दे सारं कान्तं धारावासं चारं स्मारम् ।
साराधारं[३] चारं कारं भीमं चित्तं काशीवासम् ॥ ३ ॥

धीरं देवं तारं शान्तं धारं वासं[४] ध्याये स्मारम् ।
वारं धारं चञ्चत् हृष्यत् स्थाणुं मित्रं वासं गाङ्गे ॥ ४ ॥

---

१. All MSS have this benedictory sentence here though it is not found in the beginning of other ucchvāsas.

२. All MSS display here a ष in place of श which gives rise to the suspicion that our Author himself confused between श and ष. Other examples in the immediately following ślokas are हृश्यत् (for हृष्यत् śl. 4) गिरीषम् (for गिरीशम् śl. 6), परेषम् (for परेशम् śl 8), विश्वाधीषम् (for विश्वाधीशम्, śl. 24), गिरिषं (for गिरिश in śl. 27), and महीष (for महीश in śl. 32).

३. ताराधारं K, तारार्धरं

४. L omits वासं

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

त्रिजगति सहृदयकमलजनिजहृदि, धरवरदिशि दिशि धृतरुचि कलयति।
हरिहृदि मुनिजनशुभतरकरधृत-मनसि च निजजनशरणगतटरुहि ॥ ५ ॥

सुमूर्तिं सुकम्रं करालं वरोढं तितीर्षुं सुवाहं विचारं कृपालुम्।
विपङ्कं चलद्रुं सुनालं घनाक्षं, यजेऽहं कृते तं गिरीषं(शं) हतारिम् ॥ ६ ॥

सुखकरं सुरुचिरं सुरवरं शशिधरम्।
परिसरं मृगदरं धृतगरं लघुतरम् ॥ ७ ॥

वनचरं दरहरं स्मरहरं शुभकरम्।
गतजरं हतदरं गुरुतरं जनिहरम् ॥ ८ ॥

भवन्तं घनानां[१] समानं दवाग्निं दधानं विमायं रमार्धं परेष(श)म्।
वदे तं स्ववन्द्यं (सुवन्द्यं?) कदाहं मनूनां तमोघ्नं खपारं[२] कृपौघं यदन्तः ॥ ९ ॥

सौख्याब्धिं दातारं सौख्यानां दुष्टानाम्।
हन्तारं मूढानां मुन्त्स्तौघं गंगायाः ॥ १० ॥

भूतेशं हर्तारं धौरेयं पातारम्।
संलक्ष्यं ध्यायेऽहं वर्णौघं नामौघम् ॥ ११ ॥

धृतनयन शशिधवल निजशरण बहुधनद।
विमलरुचि सुरसुरभि निजवपुषि निजशिरसि ॥ १२ ॥

परिकलितहृदि भजत करकमल ललिततर।
क्षणरचित[३] दरदलित मरणयुजि निजमनसि ॥ १३ ॥

---

१. धनानां G

२. स्वपारं GKV (which also makes good sense).

३. K omits रचित.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

वह्निं स्मरकृते देहं विदधतम्।
भूतं पुरहरं मित्रे कृतरुचिम्॥ १४॥

देवे कृतमतिं तुल्यं निजजने।
कान्त्या[1] परिवृतं नित्यं विदधतम्॥ १५॥

काशीपुरवरं देवासुरचरम्।
रुद्राक्षनिकरं भूतिं विदधतम्॥ १६॥

मायं[2] प्रभुवरं पद्मार्चनहितम्।
सत्कर्णनिकटे गायन्तमनिशम्॥ १७॥

सुखावासं स्फुरद्भासं लसद्वासं धरावासम्।
महोल्लासं दिगावासं चितारासं गतायासम्॥ १८॥

धराधीरं शिरोनीरं महावीरं हरिच्चीरम्।
रिपौ भीरं लसद्धीरं भजे धीरं समाधीरम्॥ १९॥

मायाहरण जायाधरण दायादरण कायःहरण।
पापातरण चापावरण जापादरण तापाहरण॥ २०॥

रामाभरण कामाहरण वामाचरण दामादरण।
धाराधरण साराचरण तारावरण नाराचरण॥ २१॥

विबुधत्राण मदनप्राण सुरभिघ्राण भुवनश्राण।
जनतादान शरसंधान गरलापान गिरिजामान॥ २२॥

---

१. कृप्त्या (< कृपया ?) V. कृत्या (which may also be acceptable) K.

२. माद्यं K.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

सुखसंधान निजसंमान बहुधादान वृषभायान।
कुरुकंतान चरणध्यान मनुगंगान चलित[१] प्राण ॥ २३ ॥

कलये हरणं विलसत्करणं चरणं निपुणं रसिकं हरणम्।
चतुरं विपुलं कलिलं यमितं सुखदं सुरसं रसिकं वशगः ॥ २४ ॥

सहस्राक्षस्तुत्यं लसत्शेषा[२] भूषम्।
गलद्गङ्गं ध्याये वृषारूढं वन्दे ॥ २५ ॥

समुद्यन्नेत्राज्वं(ढ्यं) पराभूताराातिम्।
पृथापुत्रप्रीतं भजे विश्वाधीषं[३] (शम्) ॥ २६ ॥

विरञ्चेः कर्तारं जनानां भर्तारम्।
भवाब्धेः संतारं मितं वेदैर्वन्दे ॥ २७ ॥

निराबाधं रुद्रं रसाधीशैर्वन्द्यम्।
पदं नैजं भक्ते कृपाधीनो दीनः ॥ २८ ॥

नमत गिरिषं (शं)[४] त्रिपुरशमनं धरणिधरजा-गणपतिनुतम्।
तमिह कलये भसितकलितं सुरवरनुतं दितिजदरणम्[५] ॥ २९ ॥

भवभयहरं पुरवरदरं भजत वरदं दमितदितिजम्।
विषमनयनं कनककवलं लघु विदधतं क्व नु खलु भवे ॥ ३० ॥

---

१. वलित K
२. षेषा GV
३. All MSS have षम् for शम्
४. All MSS have ष for श
५. दितितदरदम् KV

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

शंकरनन्दित वन्दितवासुकि नन्दिनिगायत रावणकामित ।
सुन्दरधूनित चेतसि खेचर पोषित[१] भूधर वत्सलयापित ॥ ३१ ॥

तनुं गुरुं वशं करं गतं शिवं हितं सुकम् ।
धरं करं भजे वृतं भवं शरं वरं पदम् ॥ ३२ ॥

इति कामदुघापद्यैरनवद्यैरभिष्टुतः ।
तुतोष शंकरः शीघ्रमनुकम्पापरो हरः ॥ ३३ ॥

अद्याहमनवद्याभिर्गद्यपद्याभिरञ्चितः ।
गीर्भिर्महीष[२] (श) पुत्रेण पूर्वजत्राणकारिणा ॥ ३४ ॥

जटाच्छटौघादुन्मुक्तां गङ्गां गां गमितास्म्यथहम्[३] ।
स्तुतः कामदुघापद्यैः सैषा कामदुघास्तु ते ॥ ३५ ॥

अथ स्मरहरहरजटाजूटकूटविकटावटतटीसुरनटीविडम्बनपरम्परापचयचतुरां, चतुरुदधिकुहरपूरणपरां, पराराधितचरणकमलां, कमलावलीललितविलासलास्यकलितां, कलितन्तुच्छिदुरमेदुरजलपूरां, पुरारातिशिर[४] स्ततिमल्लीमाल्यानुकल्पाम्, अनल्पाम्भ[:]प्रसरसंशोषितभयभवपङ्काम्, पङ्कावलीलुठितकमठपाठीनकठोरपृष्ठतटकटिनितम्बजम्बालपरिलम्बा(°बित ?)लतासन्ततिसंगतविकसन्नवकुसुमसमूहसंकुलमिलदलिकुलकलमञ्जुगुञ्जारवाकर्णनादत्तकर्णगोकर्णतर्णकानवलीढनवोपला(°लपा)[५] लंकृतसैकतप्रदेषा(शा)म् , प्रदेशा[६]-

---

१. षोषित GL
२. All MSS have ष for श
३. सपहं K
४. G drops the letter र in शिरस्
५. All MSS have the *metathesis* नवोपल for नवोलप (=green grass) ।
६. प्रदेषा in GLK

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

न्तरागतनानाजीविजनसंजीवनजवजर्जरितजीर्णतटीनिकटविकटपाषाणपरम्परा - स्खलन[१] संत्रस्तसमस्तवनचरजनपरि[२] गृहीतगृहसम्भाराम्, आभरणायमानवारिभर-भूषितभूवलयाम्, भूवलयाङ्क[३] नानातीर्थनिवहविरचितसङ्गाम् प्रचलतरतरङ्गाम्, गङ्गां समवलोकयितुम्—

अथ सुरवर[४] संघैरप्सरोभिः समेतो
विविधकुसुममालाजालमालम्बिनीभिः ।
विविधविबुधवामामन्द(नन्द) सन्दोहकन्दः
समभवदथ सज्जः कञ्जभूरादिदेवः ॥ ३६ ॥

यमकुबेरजलेशसुराधिपाः सुरसमाकुलसैन्यसमन्विताः[५] ।
शिवजटावटचारुनिवासिनीं समवलोकयितुं समगुस्तराम् ॥ ३७ ॥

नानाविमाननिवहेषु मुदा चरन्तो
गङ्गावतारचरितानि विचारयन्तः ।
स्वान्त(:)प्रमोदकलया सलया हसन्त-
स्तां लोचने विचरितुं समगुर्हि सन्तः ॥ ३८ ॥

---

१. सृकलन G
२. पिर° L
३. The MSS K and V drop the word भूवलयां (haplography !) and begin this part of the sentence with कनानातीर्थ etc.
४. सुरचर GL
५. G drops म in समन्विताः

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

पाताललोकतलवासिविलासिकल्पाः
सर्पास्तदा समसरन् स्व[१]विलासिनीभिः ।
दैत्या अपि[२] प्रगतचारुविकल्पमत्या
नत्यादृताः समभिसस्नु[३]रमुं सुरेशीम् ॥ ३९ ॥

सुपटहानकगोमुखझर्झरैः कृतरवैर्बहुनर्तनशीलिनः ।
समसरन् सुरसिद्धमनोहरा नटवराः सुरसिन्धुमुदे तदा ॥ ४० ॥

शुकपराशर[४]पर्वतनारदाः स्मरहरस्तवनेषु विशारदाः ।
समसरन् रभसा विधृतादराः सुरधुनीमनु सप्त मुनीश्वराः ॥ ४१ ॥

सुकवयः कवयश्च मनोहराः सुललितार्थपदस्थितिकारिणः ।
विमलकोमलमञ्जुरवास्तदा सुरधुनीमगमंश्च यतिव्रताः[५] ॥ ४२ ॥

इममुदन्तवरं वसुधातले परिकलय्य वरस्थिरजीविनः ।
निजहिताय यथा नवशालयो मुमुदिरे मुदिरेण समुक्षिताः ॥ ४३ ॥

पुरे पुरे जनपदे ग्रामे ग्रामे गृहे[६]गृहे ।
जनाननेषु समभूदु[७]दन्तः कुसुमाकरः(कुमुदाकरः?)[८] ॥ ४४ ॥

---

१. Both K and V drop स् in स्व
२. दैत्याऽपि G
३. ससृ G
४. पराषर KV
५. यतव्रताः ?
६. L omits गृ in गृहे
७. सभूभुड K मभूभुड V
८. Meaning 'cause of delight (मुद्-मुदा) for the Earth (कु)'. A conjecture.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

देशे देशे दुन्दुभिध्वान आसीद् ग्रामे ग्रामे डिण्डिमानां निघोषाः ।
घोषे घोषे वेणुनादस्तदानीं प्रत्युद्याने स्वर्गलोकाधिसिन्धोः ॥ ४५ ॥

गिरिपुरवरतुच्छस्थानकुग्रामभाजा–
मपृथुपृथुकसंघैः स्त्रीजनैराकुलानाम् ।
भवति निरयगानां देवलोकः कुलाना–
मिति कलकलरावः प्रादुरासीज्जनानाम् ॥ ४६ ॥

अहमहमिकयाग्रे पातुकानां प्रहर्षाद्
गलितवसनभूषाव्याकुलानां जनानाम् ।
तुरगरथसहस्रैरुद्धतानां समन्ताद्
अतिहलहलशब्दः प्रादुरासीत्तदानीम् ॥ ४७ ॥

तदा निरन्तरनिगमधारणानिर्मलितमेधाः वेधाः सुधानिधिधरं समबोधयत्—निखिलदेवगणचक्रचूडामणिमरीचिनिचयनीराजितपदाम्भोरुह शम्भो किमेनां नोज्झितुमीहसे? तव जटाजूटकूटावटनिकटे संकटमनुभवन्ती विगतविस्मया गतरया[१] विषहरणव्रततिततिभिरवरुद्धा पन्नगीव, मंत्रयन्त्रैर्नियन्त्रिता चन्द्रकलेव, कनकमयशलाकानिर्मितपञ्जरे परिताम्यन्ती दुःखमनुभवन्ती हंसीव वरिवर्ति (sic.)[२]। तदेनां सकलजडजीविजनोपकाराय संमोचय, त्वं तु परोपकारमयमूर्तिः सुमूर्तिभिः परिख्यातोऽसि[३], विलम्बावलम्बानमयुक्तमित्युक्त्वा तूष्णीमास। साम्बशिवोऽपि निजोर्ध्वैकजटाग्रादेनामुत्ससर्ज।

ततश्च विमलतरयन्त्रधारानुकारिधारया रयाद् दिवं हिमगिरिभुवं च समाप्लावयत्। तदानीं च सुरसिद्धकिन्नरयक्षगन्धर्वगुह्यकादयः उच्चैर्जगुः।

---

१. Both K and V omit गतरया

२. So all MSS (ought to be वरीवर्ति, वरिवृतीति or वर्वर्ति).

३. परिव्याप्तोऽसि ?

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

स्तुवन्तो परे ननृतुः। सुराङ्गना अपि कोमलकरतललालितैः कल्पतरुकुसुमनिकरैराच्छादयामासुः। सुकवयश्च नाना वर्णरचनया संवर्णयामासुः—

दिशां कण्ठे मुक्तामणिविमलहारप्रतिसरा
परानन्दावेषा(शा)दधिधरणि काशीं प्रति सरा।
तदा मध्येव्योम स्फुरणचतुरा शुभ्रमकरा
रराजोच्चैर्गङ्गा विमलशरदभ्रभ्रमकरा ॥ ४८ ॥

गर्जद्दिग्गजपुष्करान्तरचरं यत्फूत्कृतैरुज्झितं
मुक्ताजालमराल[१]बालसुषमां[२] धत्तेतरां पुष्करे[३] ।
मल्लीमाल्यसमुल्लसत्सुरनटीवक्षोजभूभृ[४]त्तटी-
प्रान्ते शुभ्रपटीयति प्रतिदिनं तद्(यद्) भाति[५] गाङ्गं पयः ॥ ४९ ॥

पयः[६]पूरभ्रान्त्या क्षुधिततरहंसैरभिगता
शरन्मेघभ्रान्त्या विपुलचपलाभिः परिवृता।
चिरं जीवंजीवैर्हिमकरकरभ्रान्तिमनसा
धराधाराधारा[७] तव विमलवारामनुसृता ॥ ५० ॥

---

१. Both K and V drop रा of मराल (मल)
२. सुशुमां G, सुषुमां L, पुमां KV
३. पुष्वरे KV
४. भूमृत् G नूभृत L
५. L drops भा in भाति, भाभि KV
६. यमः KV
७. L omits one धारा

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

ज्वलत्कनकसन्निभै[१]र्मणिमरीचिवीचिप्रभै–
र्महन्मकरकच्छपैर्ललितराजिराजीवकैः ।
रराज जलमुज्ज्वलं सुविपुलं चलं स्वर्धुनी-
प्रभूततरमम्बरेऽम्बरमणिप्रकाशीकृतम् ॥ ५१ ॥

वशीकरणमौषधं[२] ललितमुक्तिवामभ्रुवः
कृषीकररसायनं, श्वयथु[३] पुष्टपापात्मनाम् ।
[४]ऋषीश्वरगणैः सदा निजवृषीतलेऽभ्युक्षितं
हृषीककुलपावनं जयति सावनं ते पयः ॥ ५२ ॥

गङ्गाधारावलोकाय स्वाद्विमानात् समुत्सुकैः ।
विरराजाप्सरोवक्त्रैः शतचन्द्रं नभस्तलम् ॥ ५३ ॥

ततश्च तुहिनशिखरिशिखराग्रनिपतन्निर्झरझणत्कारमुखरा[५] सुखं नृत्यमानसलिलसलीलललिततरलास्यकलाविलासवाससंभावितसाहसा सहसा समुत्सर्प्यमाणा मानोन्नतकन्धरा धराधीश[६]विटतटनिकटसंकटगुहागह्वरसुन्दर-मन्दिरायमान[७]कन्दरकन्दलीलीयमानमिलदलिकुलसंकुलचलिततरा अयशःसमूह-समुत्सारणकारणीभूतपयसा प्रस्खलत्प्रस्तरवरसंस्तरत्रस्यमानैणशाव[८]-चमूरुचमरीचयचञ्चूर्यमाणचारुतरदूर्वाङ्कुरसंप्लाव्यमानपयसा परिवृत्य नित्याव-सानोद्धुरधराधीशमलंक्रियमाणारण्यानीभुवमुत्ससर्प ॥

---

१. सक्षिभै for सन्निभै KV

२. L drops धं

३. The author uses this word in neuter gender whereas it is masculine.

४. सषी L

५. L drops the word मुखरा

६. धीष G

७. G drops रा of मन्दिरायमान

८. षाव G

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

यस्यां च संकुचत्कीचकचयचञ्चच्चारुतरसमाकर्णनस्तब्धकर्ण-चमरीचयरङ्कुपोतकपोतहरिणकरिणः समुल्लसन्ति, यस्यां च घनसार - त्वक्सार-पीतसार- कोविदार- सिन्धुवार- सहकार- मन्दार- शितिसार- कर्णिकार- वानीर-करवीर- जम्बीर- पाटीर- बीजपूर- मालूर- खदिर- कदर- बदर- तमाल- ताल-हिन्ताल- कृतमाल- नक्तमाल- प्रियाल-दधिफल-निचुल- पिचुल- मधुल-मधुष्टील- गुडफल- विडल- फेनिलोद्दाल- कदली- लांगली-लवली- शाल्मली-धात्री-चित्री- जम्बू-सर्ज- खर्जूरार्जुन- जपा-न्यग्रोध- शिग्रु-मुनिद्रुम- सर्वतोभद्र-सप्तपर्ण-स्वर्णलाक्षादि-तरुलताजातयः समुल्लसन्ति ।

यत्र कीचकाश्च न वायुप्रभूतभीमवेगविमर्दिताः,

यत्र प्रियाला अपि प्रियालापशकुनिसंगताः,

यत्रार्जुना अपि गाण्डीवरहिताः कृष्णसारसमवलम्बिनश्च,

यत्र सहदेवा अपि न सहदेवानुकारिणः,

यत्र नकुला अपि न कुलीना,

यत्र कौरवा युधि स्थिरा अपि न युधिष्ठिराः,

शकुनिपक्षपातिनोऽपि न कौरवाः,

यत्र मरुज्जातिकम्पिता अपि न रावणानुचराः,

द्रोणप्रिया अपि न पाण्डवाः,

सोत्कलिका अपि न समुत्सुकाः, अपयोधयश्च ।

कुमुदपनसशार्दूलकलिता अपि न सुग्रीववानरव्यूहाः,

पीतरक्तपलाशकलिता अपि न दशाननसेवकाः,

मकरन्दसहचरा अपि न माधवाः

भुजङ्गप्रिया अपि न भुजङ्गप्रियाः ।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

यत्र चावकेशित्वं तपस्विविधवास्वेव, अनेकजटात्वं वटवृक्षेषु मुनिजनेषु च, नवपाल्लकित्वं वृक्षेषु, यत्र च निस्सारत्वं कदलीष्वेव, यत्र च मदनफला अपि कामरहिताः, याश्च[१] सशोका अपि अशोकाः, यत्र सप्तच्छदा अपि बहुच्छदावलिकलिताः यत्र सर्वतोभद्रा अपि सर्वतः कटुरसाः, धार्तराष्ट्रसहिता अपि न दुर्योधनपृतनाः, याश्च[१] सदाशिवा अपि असदाशिवाः, सरलपुन्नागार्जुन-संकुला अपि न सरलार्जुनपुन्नागकलिताः, सुररामाप्रिया अपि असुररामाप्रिया, संकेतकराजिता अपि न सोत्काः, यमलार्जुनसहिता अपि न गोकुलभूमयः।

एवं नानाविधभूमिषु विहरन्ती—

**शृङ्गाग्रादापतन्ती विकटतटगुहागह्वरेषु स्खलन्ती**
**मन्दं मन्दं धमन्ती[२] भुवनहितकृते क्वाप्यमन्दं चरन्ती।**
**भूमीपृष्ठे लुठन्ती धवलिमविभवैश्चन्द्रकान्तिं हसन्ती**
**दुःखग्रामं ग्रसन्ती हरतु जनुरघं देवसिन्धुर्लसन्ती॥ ५४॥**

ततश्चानवरतनिगमगणसमुद्गिरणपूततरया वाचा तमभिनन्दयन् विरञ्चिरवोचत्— चतुरुदधिपयःप्राचीरपरिकलितललिततरवसुमतीसीमन्तिनी-भुजङ्ग भुजदण्डखण्डितारातिमुण्डपुण्डरीकमण्डितयशःकासार, सारभूतत्रिजगदुद्धार-कारणीभूत, भूतपतिशिरोऽरण्यानीवल्लीभल्लीप्रसूनस्तबकायमानपयस्सङ्ग गङ्गावतरणवितरणप्रद, भो राजन्, धन्योऽसि। धराधरसंभृतधरणिधुरन्धराणां धौरेयोऽसि। मनुरिव प्रियव्रतासादितपुण्यश्लोकोऽसि। उत्तानपाद इव ध्रुवकीर्तिरसि। प्रह्लाद इव सद्गृहोऽसि। श्रीराम इव जनकप्रियोऽसि। कृष्ण इव कृतवसुदेवतर्पणोऽसि। महावराह इव वसुधोद्धारप्रवृत्तोऽसि। महाकच्छप इव विभृतभूमण्डलोऽसि, नृसिंह इव विदारितवैरिवक्षःस्थलोऽसि,

---

१. यत्र च ? One would rather expect ये च instead of याः च.

२. भ्रमन्ती LKV. My reasons for giving preference to the reading धमन्ती over भ्रमन्ती are twofold. Firstly, the reading धमन्ती is a *lectio difficilior* occuring in the MS which has preserved the text most faithfully and secondly, the expression मन्दं मन्दं भ्रमन्ती would stand in direct contradiction to the immediately following statement अमन्दं चरन्ती.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

प्रह्लादितचित्तवृत्तिश्च। बलिरिव वैरोचनसंभवोऽसि, सत्त्रिविक्रमाहृतराज्यसंपद्धरश्च। शिव इव द्विजराजप्रियोऽसि गङ्गाप्रेमलताकलितश्च। शक्र इव शतकोटिदानधारणपरोऽसि, कुबेर इव त्र्यम्बकवर्धितप्रेमलताकलितोऽसि। धर्मराज इव जडजीविजनजीवोद्धरणोऽसि। वरुण इव प्रचेता असि, सप्तसमुद्राधिपतिश्च।

परमदुष्करमिमं मनोरथं महीमहारथत्रिजगज्जयविरचित[१] संगरो[२] सगरोऽपि नाध्यगच्छत्। अंशुमानिव विनाशित[३] तमःसमूहः समूहोल्लसितविविधधिषणासादितदुश्चरतरतपःसमूहोंऽशुमानपि द्वात्रिंश[४]त्सहस्रसमाः समाराधिततपसा समाराधितहरचरणोऽपि नासादितवान्। सप्तद्वीपप्रकाशनप्रदीपो नानाक्रतुवरसन्तोषितसुराधिपो दिलीपोऽपि नाप्तवान्। अनेकजन्मागण्यपुण्यैरिमं मनोरथं त्रिपथगावतरणरूपं समासादितवानसि—

यावत् सप्तसमुद्रमुद्रितमहीमुद्रा दरीदृश्यते
यावच्चन्द्रदिवाकरौ जगदिदं सम्यक् प्रकाशिष्यतः ।
गङ्गोत्तुङ्गतरङ्गरिङ्गणचमत्कारावतारोद्भवा
कीर्तिस्ते नृप कृत्तिकापरिवृढस्पर्धाकरी स्थास्यति ॥ ५५ ॥

कुप्यत्श्री[५]कपिलर्षिलोचनपुटाविर्भूतवह्निच्छटा-
निर्दग्धस्थपुटा यमालयबहिर्भूतावटा संकटाः ।
तावत्स्वर्ग[६]परम्परोपरि गृहे स्थास्यन्ति ते सागराः
यावद्गाङ्गतरङ्गरिङ्गणचमत्काराभिरामं[७] जगत् ॥ ५६ ॥

---

१. All MSS except G drop the word विरचित
२. So all MSS (instead of grammatically enjoined संगरः)
३. विनाषित all MSS except G
४. द्वात्रिंषत् all MSS except G
५. So all MSS, though *saṃdhi* in a *samāsa* is obligatory and one would expect कुप्यच्छ्री etc.
६. सर्ग L,G
७. अधिरामं V

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

कनकमणिविभूषाचित्रिताङ्गं रथाङ्गं
जवतरहयहेषा[१]चक्र[२]घोषाभिरामम्।
रथवरमधिरुह्याग्रेसर[३] क्षोणिपाल
प्रचुरसुकृतभाजामद्य चाग्रेसरोऽसि ॥ ५७ ॥

बहुतरवरिवस्याभावमस्याः समन्ताद्
विचरतु तव सेना प्रेमभूसद्रसेन।
अहमपि सुरसंघैः साकमालोकनोत्कै-
र्द्रुततरमनुगन्ता भूरिलोकोत्सवाय ॥ ५८ ॥

धरणितलनिवासाः सोत्सवा भूरिलोका
ग्रहगणभुजगेशा यक्षगन्धर्वसंघाः।
परिकलितखनित्राः प्रौढकुद्दालभाजः
सुललिततरमस्याः मार्गमाशोधयन्तु ॥ ५९ ॥

स्वर्गतः शापपतिताः पतिताश्च महीतले।
सुरसिन्धुं निरीक्षन्ते राक्षसीं तनुमाश्रिताः ॥ ६० ॥

इति विरञ्च्यनुशासनमाकलय्य प्रबलतरपापभञ्जनाय विरचितव्यूहा, दात्यूहहंससारसचकोरकुररकुक्कुटचक्रवाकवकचक्रवालसकलकलारावसंकुल - कूला, अनुकूलस्थतरुवरविकसल्लताप्रतानविलसत्कुसुमचयस्तबकसंस्तभ्यमान-सलिला, सलीलनीलकण्ठनृत्यविकसद्वर्हसंभावितकच्छा, कच्छपमत्स्य-कुललीयमानकुहरा, हराङ्कवृषभविषाणमण्डलोद्धतस्खलितविषमपाषाणशतसंबा-धा, बाधितखरकिरणखरकिरणसञ्चारा, सञ्चारायसंस्थितचमूरुचयसंचरण-

१. नवतरहयोषा K
२. वक्र V
३. अग्रेसरः G

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

चञ्चूर्यमाणनवोलपा(पला)लंकृतसैकतशतसंचरन्मरालबालमालायितडिण्डीरपिण्ड-समलंकृता, कृतान्तभयसन्त्रस्यमानानेकजडजीविजनसंकुला, कूलस्थितमत्त[१] कलहंसगणकलकूजनसमाकर्णनस्तब्धकर्णगोकर्णतर्णकानास्वादनप्ररूढ दूर्वाप्रतानवितानायमानाच्छकच्छजला, जलान्तर्गतविकटग्रावगणसंघर्षणघर्घररवाकर्णनसंप्रीयमाण[२] समस्तजीविजना, नानाविधविलसद्रयभरभ्रमभङ्गा गङ्गा प्रससार।

क्वचिज्जलजराजिता जलजराजिता भूतले
पतत्रिगणसेविता त्रिगणसेविता पापहा।
भगीरथपताकिनी रथपताकिनीरोच्चया
भवद्भवभयापहा भवभयापहा दृश्यते ॥ ६१ ॥

अथ समस्तविषमविषयविषव्याकुलितान्तःकरणासादितदुश्चरतरतपःप्रभावाराधितसमस्तयोगसिद्धिः, सिद्धवरपूजितपादपद्मः, पद्मालयालालननिवृत्तचित्तः, चित्तान्तर्हरिचरणस्मरणपरायणान्तःकरणपवित्रतया निरन्तरसन्तन्यमानसप्तसंस्थासंस्थापनपूर्वकमनेकसप्ततन्तुरचनया हरेरर्चनमाचरन्नार्यावर्तान्तर्गतभूमौ यज्ञवाटं विरचयन् निह्नुतसकलकलिकलुषो वर्षीयान् जह्नुराजर्षिरतिष्ठत्। तस्य च यज्ञवाटं केनापि मनोरथेनाकुलिताङ्गा प्रचलतरतरङ्गा गङ्गाभिससार। तं यज्ञवाटमभिलुण्ठयन्त्या[३] प्लावयामास। ततस्तदविनयाप्तकोपसंतन्यमानमनाः मनाक् विहस्याह—अहोऽस्या गर्वायितं पश्यत मय्यप्यविनयोपक्रमम्! तदेनामेणाङ्कशेखरमौलिमालां मैनाकमेनातुहिनगिरिलालितामपि कुम्भसम्भवः पाथोधिमिव योगकलया पाणौकृत्य[४] नेत्रे निमीलयित्वा[५]—

१. Both K and V drop त्त of मत्त

२. मान G

३. लुण्ठयन् G

४. The G has the reading करतले कृत्वा which is equally good. But the majority of the MSS (3) supports the reading accepted in the text above.

५. So all the MSS. It is a careless mistake of the author himself (prompted probably by the memory-traces of the well known line of Kālidāsa occuring in the Meghadūta (II. 47) : शेषान् मासान् गमय चतुरो लोचने मीलयित्वा) since the correct grammatical form would be निमील्य.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

ताम्यत्तीव्रतिमिङ्गिलां समकरव्याक्षोभ्यमाणान्तरां
नक्राक्रान्तकठोरकच्छपमिलत्पाठीनपृष्ठाकुलाम् ।
भ्रश्यद्भूरि[1] सशोककोकबकयुक्सम्यक्सरत्सारसा-
मास्वाद्यर्षिवरो परोत्कलिकया गङ्गामपात् कोपतः ॥ ६२ ॥

निष्पीतां भुवि जह्नुना त्रिपथगां श्रुत्वातिमात्सर्यतः
प्रेमस्थानविलासनाशवशतः कौतूहलान्वेषिणः[2] ।
गौरी नृत्यति रोदिति स्मरहरो मुञ्चन्ति नाकं सुराः
सर्वे[ऽ][3] संभववस्तुनि प्रकटिते किं किं न संभाव्यते ॥ ६३ ॥

पुरस्सरभगीरथो रथवरेण गच्छन् यदा
रथोल्लिखितमार्गगां त्रिपथगां न चालोकयत् ।
तदा श्रमनिरर्थतापरिविभावनाव्याकुलः
पराक् वलित[4] कन्धरः कमलजातमालोकयत् ॥ ६४ ॥

विधे, किमिदमद्भुतं मम हि भूरिदुर्दैवतो
विलोपमगमत् कथं सुरसरिद्, भ्रमो वा मम ।
तदा विधिरवीवदद् विविधसान्त्वयानो नृपं
भगीरथ वृथा[5] ऽऽधिभिः किमिह तप्यसे बालवत् ॥ ६५ ॥

---

१. भ्रश्यभूरि GL
२. कौतूहलान्वेषिणा KSV (कौतूहलान्वेषिन् refers to Śiva).
३. Supplied by the editor, a conjecture.
४. Both K and V have the common corrupt reading परावलेत. Note that the poet choses to retain the letter क् in पराक् in spite of a व following on it. One would expect here a regular saṃdhi, turning क् into ग्
५. वृष्टा (थ of an older MS read as ष्ट by the scribe-copyist) KV

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

भवद्रथपथानुगा त्रिपथगाऽधुना सर्वथा
भविष्यति वृथा श्रमो न भविता श्रमं मा कृथाः ।
निगद्य ऋषिनायकं समवदद्विरञ्चिस्तदा
मुने किमिदमद्भुतं रचितवानसि त्वं क्रुधा ॥ ६६ ॥

जहीहि जडजीविनां निजहिताय तापापहां
तवापि दुहितापदं समुपयास्यतीयं भुवि ।
भवज्जठरमण्डपे समनुभूय बाधामिमां
हरिष्यति भवार्णवे जठरसंभवं पापिनाम् ॥ ६७ ॥

विलम्बमल(थ?) मा[१] कुरु त्यज निजौजसा श्रोत्रतः
पवित्रयतु गामियं मम वचोभिरामुञ्च वै ।
भगीरथपरिश्रमं परिकलय्य नैजे हृदि
क्षितौ क्षपितकल्मषा किमुत सज्जना नासते ॥ ६८ ॥

इति वचनविलासाडम्बरैर्वेधसोऽपि
प्रचुरकरुणयाऽसावाप्तवान् स्वां[२] कुमारीम् ।
श्रुतनिगमपवित्रात्[३] श्रोत्रतोऽतीत्यजह्नै
प्रचुरकमलसंगामाशु गङ्गां क्रमेण ॥ ६९ ॥

---

१. All MSS have uniformly this reading which is also attested by the metre. But should it not be विलम्बमलं मा ? conjectural reading : विलम्बमथ.

२. चां GKV (L has स्वां). However my conjecture is that the original reading was probably तां which got converted into चां through scribal mistakes and was later 'corrected' into स्वां in L (वान् तां or वान्तां, न्त > च restored to न् च [ां])

३. No MS shows here the expected saṃdhi च्छ्रो. The L MS has even the reading त्रा श्रो (having dropped the letter त्) which is again an indication as to the fact that the author did not join these letters. Saṃdhi is usually considered to be obligatory (नित्या) in a metrical composition.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

पुनरपि सुरगङ्गा पूर्वसंस्थानरूपा
समगमदथ भूपं कामरूपाभिरूपम्।
तदवधि भुवि धन्या जह्नुकन्यामिधेयं
सुरमुनिकविवृन्दैर्गीयते गीर्भिरुच्चैः ॥ ७० ॥

अथ भगीरथभूमिपुरन्दरो
दरवरोज्झितमानससुन्दरः।
परितुतोष यथा दिवसोदये
मुकुलभावगताम्बुरुहावलिः ॥ ७१ ॥

स्नात्वा त्वमपि पूर्वेषां निवापसलिलं कुरु।
दत्त्वा दानानि विप्रेभ्यो गच्छायोध्यापुरीं स्विकाम् ॥ ७२ ॥

प्रयागमनुसृत्यैषा काशीं सम्भावयिष्यति।
इत्युक्त्वा त्रिदशैः साकं ययौ नाकं पितामहः ॥ ७३ ॥

स्मरहरणजटाभिश्छिन्न[१]वेगौघगङ्गा-
चरणपरिचयेनानन्दसन्दोहकन्दः ।
अथ नरपतिधुर्यो राजधानीं स्वकीयां
हयवरमखमेध्यां सोऽप्ययोध्यामयासीत्[२] ॥ ७४ ॥

॥ इति साहित्यपारावारपारीण-कविताकान्तारकण्ठीरव-
सर्वस्वदानदीक्षाविचक्षण-श्रीमद्दीक्षितबालकृष्ण-
सूनुशंकरविरचिते गङ्गावतरणचम्पूप्रबन्धे
गङ्गाचरणाङ्कः चतुर्थ उच्छ्वासः ॥



१. छन्न L
२. The MS G drops this entire verse.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# पञ्चम उच्छ्वासः



शृङ्गारहास्यकलितैश्शिवया कलितश्शिवः कटाक्षौघैः ।
व्यक्तं सितासितवपुः पुनातु तीर्था[१]धिराज इव ।

ततो मुनिगणैः सार्धं स्तुवद्भिः स्तुतिपाठकैः ।
प्रयागमनुलक्ष्यैषा ययौ शेषाहि[२]विभ्रमा ॥ २ ॥

विमलतपनपुत्रीवारिचित्रीयमानं
सुरसरिदभियाने मार्गमुद्वीक्ष्यमाणम् ।
विविधविबुधभाजं सर्वतीर्थाधिराजं
विधिविरचितयागं सा प्रयागं ददर्श[३] ॥ ३ ॥

तत्र च–

भारद्वाजमुनीश्वरस्य विपुलं तत्राश्रमं श्रीयुतं
शङ्कापङ्कनिरङ्करङ्कुरमणीव्याघ्रादिभिस्सङ्कुलम् ।
प्रातः सायमहो हुताग्नि[४]विलसद्धूमावलीढद्रुमे
विन्यस्ताजिनचीरचीवर[५]चयैराच्छन्नमच्छच्छविम् ॥ ४ ॥

---

१. पुनानु KV नीर्था V भीर्था K

२. षेषाहि G, शेषाद्रि K

३. In the MSS G and L the order of the hemistiches (the two halve
verse is changed, i.e. it starts with the foot c विविधविबुध and e
with the end of the foot b उद्वीक्ष्यमाणम् (the order thus is cdab)

४. हुताम्रि KV

५. वीचर (for चीरचीवर) K, वीर (for चीर) V

-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Acade

पुनरपि सुरगङ्गा पूर्वसंस्थानरूपा
समगमदथ भूपं कामरूपाभिरूपम्।
तदवधि भुवि धन्या जह्नुकन्याभिधेयं
सुरमुनिकविवृन्दैर्गीयते गीर्भिरुच्चैः ॥ ७० ॥

अथ भगीरथभूमिपुरन्दरो
दरवरोज्झितमानससुन्दरः।
परितुतोष यथा दिवसोदये
मुकुलभावगताम्बुरुहावलिः ॥ ७१ ॥

स्नात्वा त्वमपि पूर्वेषां निवापसलिलं कुरु।
दत्त्वा दानानि विप्रेभ्यो गच्छायोध्यापुरीं स्विकाम्॥ ७२ ॥

प्रयागमनुसृत्यैषा काशीं सम्भावयिष्यति।
इत्युक्त्वा त्रिदशैः साकं ययौ नाकं पितामहः ॥ ७३ ॥

स्मरहरणजटाभिश्छिन्न[१]वेगौघगङ्गा-
चरणपरिचयेनानन्दसन्दोहकन्दः ।
अथ नरपतिधुर्यो राजधानीं स्वकीयां
हयवरमखमेध्यां सोऽप्ययोध्यामयासीत्[२] ॥ ७४ ॥

॥ इति साहित्यपारावारपारीण-कविताकान्तारकण्ठीरव-
सर्वस्वदानदीक्षाविचक्षण-श्रीमद्दीक्षितबालकृष्ण-
सूनुशंकरविरचिते गङ्गावतरणचम्पूप्रबन्धे
गङ्गाचरणाङ्कः चतुर्थ उच्छ्वासः ॥



१. छन्न L
२. The MS G drops this entire verse.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## पञ्चम उच्छ्वासः



शृङ्गारहास्यकलितैश्शिवया कलितश्शिवः कटाक्षौघैः।
व्यक्तं सितासितवपुः पुनातु तीर्था[1]धिराज इव॥ १॥

ततो मुनिगणैः सार्धं स्तुवद्भिः स्तुतिपाठकैः।
प्रयागमनुलक्ष्यैषा ययौ शेषाहि[2]विभ्रमा॥ २॥

विमलतपनपुत्रीवारिचित्रीयमानं
सुरसरिदभियाने मार्गमुद्वीक्ष्यमाणम्।
विविधविबुधभाजं सर्वतीर्थाधिराजं
विधिविरचितयागं सा प्रयागं ददर्श[3]॥ ३॥

तत्र च—

भारद्वाजमुनीश्वरस्य विपुलं तत्राश्रमं श्रीयुतं
शङ्कापङ्कनिरङ्करङ्कुरमणीव्याघ्रादिभिस्सङ्कुलम्।
प्रातः सायमहो हुताग्नि[4]विलसद्धूमावलीढद्रुमे
विन्यस्ताजिनचीरचीवर[5]चयैराच्छन्नमच्छच्छविम्॥ ४॥

---

१. पुनानु KV नीर्था V भीर्था K

२. षेषाहि G, शेषाद्रि K

३. In the MSS G and L the order of the hemistiches (the two halves) of this verse is changed, i.e. it starts with the foot c विविधविबुध and concludes with the end of the foot b उद्वीक्ष्यमाणम् (the order thus is cdab)

४. हुताग्नि KV

५. वीचर (for चीरचीवर) K, वीर (for चीर) V

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

तत्र सुललितवाग्विलासिनः सुकवयः मागधवन्दिनश्च तीर्थाधिराजं स्तुवन्तो गङ्गामूचुः—

ब्रह्मलोकादपि सुखं प्रयागमवलोकय।
तं विहाय भरद्वाजः समुपास्तेऽन्यथा कथम्॥ ५॥

स खलुं हंसगणैः परिसेवितः
परमहंसगणैरयमन्वहम्।
निवसते किल तत्र सरस्वती
यमुनया किल साऽत्र सरस्वती॥ ६॥

सर्वदा श्रुतिगणैः समुपेतः
सर्वविश्रुतगणैः कलितोऽयम्।
तस्य दाननिपुणोऽयमृषीणां
नैष दाननिपुणोऽस्य कथञ्चित्॥ ७॥

एक एव जठर(रठ)[१]श्चतुरास्य-
स्तत्र, चात्र सकलश्चतुरास्यः।
तत्र पद्मसदनो विधिरेक-
श्चात्र पद्मसदना जनसङ्घाः॥ ८॥

अक्षयो बहुपादत्र लक्षयोजनविस्तृतः।
महाप्रलयकल्लोले यद्दलेऽस्वपदच्युतः॥ ९॥

---

१. I guess that the correct reading here was probably जरठ (old man, senile person) which has been corrupted into जठर (belly, stomach)

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

भूमिस्थतीर्थराजोऽयमत्युच्चैर्भासतेतराम् ।
यत्र स्थितानां निकटे वैकुण्ठोपवनस्थितिः ॥ १० ॥

कुवलयदलमाला पुण्डरीकावनद्धा
पिककुलपरिरब्धा राजहंसावलीव ।
वहतु कमपि शोभाभारमुच्चैरिदानीं
भुवि तपनतनूजा देवि, ते संगमेन ॥ ११ ॥

ललितविमलमुक्तामालिका शक्रनीलै-
र्वचनरचनदेव्या सद्गुणैर्गुम्फितेव[1] ।
वह बहुतरशोभां तीर्थराजोपकण्ठे
त्वमपि जनशरण्ये भानुजासंगमेन ॥ १२ ॥

भवति यदि तपस्यासेवनं तीर्थराज्ञः
किमिह बहुतपस्यायोगयागादिवृन्दैः ।
अपि तरणितनूजा केवला पापहन्त्री
किमु नगपतिपुत्री चेद् विचित्रीकरोति[2] ॥ १३ ॥

तव तरलततरङ्गैर्लालिता भानुपुत्री
वहतु कमपि शोभाभारमुच्चैरिदानीम् ।
हिमगिरिशिखरौघैः शक्रनीलस्थलीवद्
हिमकरकरसङ्गैरङ्कुकायप्रभेव ॥ १४ ॥

---

१. cf. Raghuvaṃśa XIII. 54 क्वचित् प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा ।
२. करोतु L

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

तवागमनहेतवे कृशतरा विशेषादियं
तपस्यति तपस्यतिप्रचुरपुण्यलाभेच्छया।
तव स्तव[१] सरस्वतीकृतसमाश्रयापि ध्रुवं
त्वमप्यतिकृपाभरा त्वरितमद्य संभावय॥ १५॥

इति कविवरवाचावर्णनाकर्णनोत्थ-
प्रचलतरतरङ्गा देवगङ्गा क्रमेण।
विदलितबहुकूलां भूमिमुल्लासयन्ती
विकचमुखसरोजां भानुजामाससञ्ज॥ १६॥

अथ सितासितभावमुपागतं
रचय तीर्थमहीपगृहाजिरम्।
अचिरतश्चिरतः किमु वाञ्छितं
दधति नो विबुधा भुवि भाविताः॥ १७॥

वदति च निजकान्ते काललोपो न भूयाद्
इति तपसि सुवेणी कापि वेणीतटस्था।
उदयशिरसि यान्तं भानुमन्तं विलोक्य
प्रविशति जलमध्ये शीतभीता मृगाक्षी॥ १८॥

का सौरी हन्ति शीतं दशवदनशिरश्छेदने हेतुभूता
वैकल्यार्थेऽव्ययं किं[२] नरहरिहरिणा किं विभिन्नं कराग्रैः।
का कृष्णे भूरिभक्ति(°क्ते)[३]र्भवति जनमुदे किं घनात् कर्षकाणां
गङ्गां कः प्राप्य माघे प्रहरति कलुषं *भानुजावारिपूरः*॥ १९॥

(अन्तर्लापिका)

---

१. So all MSS; however the reading is a little doubtful since it is difficult to accommodate the losely hanging स्तव in the syntax.

२. व्यर्थं KS

३. An editorial conjecture which straightens out the syntax.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

अथ मार्तण्डतनयासंश्लेषसुखिता तीर्थराजदर्शनसंभवदानन्दसन्दोह-तुन्दिला गङ्गा विन्ध्यमभिससार। कवयश्चोचुः—

**त्वज्जलौघघनघर्घररावाकर्णनोच्चलितसंमदधारैः ।**
**बन्धुराः प्रबल[१] सिन्धुरवर्गैर्विन्ध्यकाननभुवः समुपेयाः ॥ २० ॥**

**सप्तपर्णरसवासविलुभ्यन्[२] मन्दमन्दमधुपावलिखेलाः ।**
**हेलया [३]समभिसस्रुरमी त्वां विन्ध्यसिन्धुरघटा घनघोराः ॥ २१ ॥**

यश्चानेकमणिगणमयूखनिचयखचितखान्तरालविलसत्सहस्रशिखरसंभावितसहस्रकराजस्रप्रदक्षिणकनकाचलसंस्पर्धावर्धमानमत्सरसंवर्धितानेकसहस्रशिखरसमुच्छ्रायसमवरुद्धसहस्रकरनिकरमार्गसंरोधव्याकुलदेवासुरगन्धर्वकिन्नरयक्षोरगसिद्धमुनिगणसंस्तूयमानागस्त्यमुनिवरसंनामितशिखरसहस्रमजस्रं त्वां शिरसा समुद्वोढुकामो घस्रसहस्राण्यति[४] वाहयति स्म। तव विमलतरसंकुलकल्लोलमालाजाललालनमभिलश्यमानो[५] [लष्यमाणो] मानोन्नतकन्धरो धरोऽयं सुधाधरकरसहोदरदलितसरोजावलिसुन्दरतरतरणितनूजातरलतरङ्गधरधाराभिरभिसंभावनीयः। अयं च चञ्चच्चन्द्रिकाचयकवलनकुशलललिततरचञ्चलचकोराङ्गनानिचयो विस्फारितचञ्चुचयप्रचलतरवीचिनिचयमापातुकाम इव विपुलतरप्रस्तरवरपरिसरमनुसरन् सरिसर्ति। क्वचिच्च गुञ्जदलिपुञ्जमञ्जुलवञ्जुलनिकुञ्जः मधुरतरतरलतमतरङ्ग[६] भिसरणमभिनन्दयतीव—

---

१. मबलं V

२. विलुम्पन् S

३. तमभि L

४. All MSS read here सहस्रारायति which is an obvious orthograplical mistake for सहस्राण्यति that must have been written in the from of सहस्राय्यति in the older model MSS.

५ A grammatical mistake which must be credited to the account of the Author himself, because, first of all, it is found invariably in all the MSS and secondly, he seems to be attempting an alliteration (अनुप्रास) with the next word मानो.

६. The word तरङ्ग is missing in G

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

यत्र पुष्पितलता वनितावन्-
मञ्जुगुञ्जितरवैर्भ्रमरीणाम् ।
मङ्गलानि विपुलानि चरन्तो
देवि तेऽद्य सलिलोद्गमनाय ॥ २२ ॥

श्रीमद्विन्ध्यमदान्धसिन्धुरघटासंघट्टमानद्रुम-
स्कन्धोड्डीनमिलिन्दसुन्दरगणैराच्छाद्यमानं नभः ।
देवि त्वद्गमनावलोककुतुकान्निर्यद्भिरंशुव्रजै-
राच्छन्नं किमु नीलरत्ननिचयोद्भूतैस्तदानीमभात् ॥ २३ ॥

क्वचिच्च—

चतुरतरसुरवरकिन्नरगीयमानसुस्वरसमाकर्णनस्तब्धकर्णचमरीचयचमत्कार-चर्चितचरणः। क्वचिच्च उच्चतालतमालाग्रललित[१] प्रवालकरतलाग्रैर्बहुदिन-प्रोषितागस्त्यमुनिवरगुरुमाह्वयतीव। क्वचिच्च निपतिततालफलावलिविदारणा-समर्थकपिकुलकरतलालोड्यमानस्फुटितस्यन्दमानरसास्वादनाविर्भूतामन्दानन्दस-न्दोहतुन्दिलितप्रेयसीगणपरिवृतपरिसरः। क्वचिच्च विकटकटकचारिखञ्जरीट-कुलनिधुवनलीलाविलोकनानन्दितकुद्दालखनित्रनिषादकुलखन्यमानधरणितल-विवरपरिलभ्यमाननिधिसंचयचमत्कारकरम्बितकन्दरः। क्वचिच्च घनतरतरु-वरराजिमिलदलिपुञ्जारवाकर्णनोन्निद्रकण्ठीरवरवाकर्णनसंकुचत्करिकलभनिभृत-कन्दरः। *क्वचिच्च पुलिन्दसुन्दर्यः आकुलितभावं शशकशावमालोक्य समवोचन्—

---

१. G omits त of ललित

*—* G omits the entire textpiece from क्वचिच्च पुलिन्द upto धनुः (p. 75).

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

तव पलायनमेव किलोचितं
जहिहि बालतृणाङ्कुरसञ्चयम् ।
इह हि भिल्लगणस्य शिताः[1] शराः
शशक, शृङ्गमयं[2] कठिनं धनुः* ॥ २४ ॥

क्वचिच्च—

सुरतानुभोगसुखिता विचित्रपत्रावलीललिता ।
विटपीतासवकलिता वारवधूवल्लता यत्र ॥ २५ ॥

विकचवाणदलावलिलोचनः
शिखरमूर्द्धसहस्रसमाकुलः ।
अगणितालघुपादपरीवृतो
लसति भूरिविराडिव भूधरः ॥ २६ ॥

क्वचिच्च—

प्रौढकण्ठीरवखरनखरप्रकरपाट्यमानमत्तमातङ्गकुम्भस्थलोच्छलद्बहलमुक्तागणतारकितगगनाङ्गणपरिसरः, क्वचिच्च तटनिकटविकटकन्दरामुखनिर्गतनिर्झरझरझरारवाकर्णनोत्कण्ठनृत्यन्नीलकण्ठाकुण्ठकेकापरित्रस्तभुजङ्गकुललीयमान - शिलासहस्रान्तराल[3] बिभ्यद्हरिणीशावकूर्दनाधूतविकसन्नवलताप्रतान[4] पुष्पोत्कराच्छादितग्रावगणः, क्वचिच्च पुष्पितनवकिंशुकशुकमुखहरिनखानु-

---

१. वराः (for शिताः) KLV
२. K and V have a corrupt reading शाशधृकष्टंगमयं (for शराः शशक शृंगमयं)
३. °न्तर (for अन्तराल) KVS
४. One expects here the word वितान (bower) instead of प्रतान which means tendrils (cf. लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम्, Raghuv.II.8). However the poet is also fond of the expression प्रतानवितान (cf. p. 17, l. 12 and p. 65, l. 4).

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

कारिकोरकावलीविलोकनपरित्रस्यमानकरिकलभकुलामर्दितनववल्लरीमञ्जरीपरागपरिमलवासितकन्दरसुन्दरः[१]—

असितकान्तिरसौ धरणीधर-
स्तव विधुच्छविवारिपरिप्लुतः।
अनुकरोतु रुचिं गिरिशायिनो[२]
हरिहरार्धतनोर्विधुशेखरः ॥ २७ ॥

फुल्लपङ्कजवनीनवनीपप्रोल्लसद्विविधगन्धसुगन्धिः ।
वासयन् गिरिभुवः करिकुम्भं गन्धवाहनिवहः सरिसर्ति ॥ २८ ॥

क्वचिच्च—

मत्तारण्यमहिषविषाणमण्डलोत्क्षिप्तपाषाणशतविषमी[३]कृतवनचरकिराततरुणीगमनमार्गः, क्वचिच्च प्रौढभल्लूककुल*हिक्कापरित्रस्यमानपुलिन्दकुलकरस्रस्तधनुर्बाणपरिवृतारण्यपथः, क्वचिच्च चपलकपिकुल* - कमलायमानहस्ततलमुष्टिगतलम्बायमानसरीसृपशिरोघर्षणशोणपाषाणतलः, क्वचिच्च भूदारदारितसरित्कूलमूलपतद्ग्रावगणसंक्षुभ्यत्तिमिमकरनक्रचक्रभयभ्रान्तपिपासुमृगपोतगणः, क्वचिच्च मत्तकासरगणविलोड्यमानकासारकलुषीकृतजलमज्जमानराजीवकुलोत्पतितभृङ्गावलीमञ्जुगुञ्जितसंगीतध्वनिसमाकुलः—

वाहिनीशतपरीवृतदेशः प्रोच्चलच्चमरभूषितवेशः।
छत्रितामृतकरोच्चसमाजः किन्न विन्ध्यशिखरी गिरिराजः ॥ २९ ॥

---

१. छन्दरः K
२. षायिनो G
३. विशमी G
*—* After this कुल the MS V drops the entire text piece upto the word कपिकुल due to *homoeoteleuton* and resumes the same with कमलायमान.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

सदाशिवासक्तमनोऽभिलाषा
कण्ठीरवोल्लासिकटिप्रदेशा।
भूभृत्सदङ्कस्थितितोषयोषा[१]
भूभृद्दरीयं नृपसुन्दरीव॥ ३०॥

सद्विद्रुमोल्लासिमुखप्रदेशा
सुचित्रपत्रावलिचारुवेशा ।
अहीनभोगाकलिता नितान्तं
भूभृद्दरीयं नृपसुन्दरीव॥ ३१॥

सदानवाभोगविलासयुक्ता
पुष्पेषु संसक्तनवालिकान्ता।
सद्दन्तकालीलसदास्यदेशा
भूभृद्दरीयं नृपसुन्दरीव॥ ३२॥

यश्च सहस्रपादोऽपि न सहस्रभानुः, सहर्षशीर्षापि न शेषनागः, अनन्तभोगकलितोऽपि न शेषशायी, यश्च जठरान्तःसंभृतभुवनोऽपि न विष्णुः, पद्मभूरपि न विरञ्चिः, कमलाकलितोऽपि न नरहरिः। सरिच्छतसेवितोऽपि न समुद्रः, अर्जुनाकलितोऽपि न सिन्धुराजः। गौरीप्रियोऽपि न सदाशिवः। रोहिणीप्रियोऽपि सहरिणश्च न चन्द्रः, सन्निधिप्रियोऽपि न कुबेरः, कासरसंचारोऽपि न धर्मराजः, जडजीविजनैः परिवृतोऽपि न वरुणः, सदागतिसखोऽपि नानलः, नैषधकथेव सनलः, भारविकाव्यमिव सार्जुनः, रामायणमिव नलकुमुदपनस*सेवितः, नलकूबर इव रम्भाकलितः, कैलास इव नर्तनशीलनीलकण्ठः, ब्रह्मसदनमिव* समल्लिकाक्षः, मालतीमाधवप्रकरणमिव सकलहंसः, रघुवंशकाव्यमिव अजसीता-

१. योशा LV योशी K

*—* The MS L drops the text portion after स of पनस and resumes with मल्लिकाक्षः (which has a स preceding it) due to *homoeoteleuton*.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

रामलक्ष्मणकुशलवकलितः, वासवदत्ताख्यायिकेव चिन्तामणिकन्दर्पकेतुमकरन्द-कलितः, हरिमूर्तिरिव सशंखचक्रः शाङ्र्गकलितश्च, हरमूर्तिरिव भूतगणकलितः चन्द्रशेखरश्च, स्कन्द इव[१] मयूरसेवितः, राजान्तःपुरमिव कञ्चुकिकलितः ॥

यत्र पलाशा अपि न राक्षसाः, अशोका अपि न ब्रह्मज्ञाः, यत्र उदुम्बरा[२] अपि न द्विजाः, यत्र धात्र्योऽपि न बालपोषणचतुराः, श्रीफला अपि न राज्यसुखभोगदायिनः[३] माधव्योऽपि न कृष्णप्रियाः, मालत्योऽपि न भूरिवसुसमुद्भवाः—

**शीतवाततपनौघसहिष्णुः**
**सुस्थिरस्थिरतरेन्द्रियजिष्णुः ।**
**सत्तपस्वि[४]गणसाधुसमाजः**
**किं न विन्ध्यशिखरी मुनिराजः ॥ ३३ ॥**

तत्र च—

सकलदेवासुरमुकुटमणिमयूखमञ्जरीपिञ्जरीकृतचरणा, चरणानततमजनता-जनितापसंभारसंहारविचक्षणा, क्षणदापतिकलाकुलितालिक[५]तलप्रकाशितभक्त-जनमानसकुमुदा, कुमुदाकराकरणसन्त्रासित[६]सुरवरशरणा, शरणागतजनमनोवृत्ति-परिपूरणकामा, कामारिहृदयपरिचयप्रवाहपरिपूरितान्तःकरणा, रणासादितप्रबल-प्रचण्डचण्डमुण्डादिमुण्डविरचितहारा, हारावकरणतत्परपरित्रासितपरनिकरा,[७]

---

१. यिव (for इव) G
२. दुदुंबरा KV उदुंबुंरा G
३. G drops सुखभोगदायिनः
४. G drops स्वि of तपस्वि
५. अलिकं = मस्तकं, forehead. Not to be confused with अलकं (curly hair), cf. śl. 32 on the previous page.
६. संवासित KV. The readings कुमुदाकराकरण and the following हारावकरण pose problems of interpretation.
७. विकरा KV

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

कराकृष्टकोदण्डनिस्सरदकाण्डशरकाण्डखण्डितारातिततिप्रकरा, करावलिविराजमाननानाशस्त्र[१]समूहप्रभाभारभासुरा, सुराधीश[२]प्रमुखवन्दारुदिविषद्वृन्दसंस्तूयमानचरित्रविचित्रा,[३] चित्राधिपकरनिकरप्रभाभासुरहासिनी, दंष्ट्राकोटिविसंकटकवलनविदारितदैत्यवरसिंहासिनी, विन्ध्यवासिनी विलसति ॥

या च–

भासुरारुणसम्भारभावितांघ्रियुगा सदा ।
दारुणद्युतिविद्योति-काश्यपिप्रस्फुरत्प्रभा ॥ ३४ ॥

भाति भूमौ सुलावण्यचञ्चच्चतुरता सभा ।
भार्या दात्री भावुकानां त्रिनेत्रस्य स्वभावतः ॥ ३५ ॥[४]

इति विचित्रवर्णं कृपाणमाकलयन्ती ।

या च–

कासरासुरविमर्दवदान्या भासुराकृतिधराधरकन्या ।
यत्र वासमकरोत्[५]सुशरण्या तादृशी त्रिभुवने वद कान्या ॥ ३६ ॥

---

१. शाशस्त्र G, शशस्त्र L
२. धीष GV, धीध (where ध presupposes a ष) K
३. विचित्राविचित्र (for चरित्रविचित्रा) LKSV
४. The MS G totally omits these two verses as well as the subsequent line इति विचित्रवर्णं etc. The following line (इति विचित्रवर्णं कृपाणमाकलयन्ती) seems to indicate that these two verses can be set in खड्गबन्ध.
५. त्स्व LV त् च GK

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

मनोविकासकारिणी दरिद्रतानिवारिणी
प्रपन्नतापहारिणी चलल्लुलापदारिणी[१]।
सदामनोविनोदिनी सदागमै*कबोधिनी
कृतान्तमार्गरोधिनी मनःप्रकारशोधिनी ॥ ३७ ॥

सुरेशमानमण्डिनी सुरारिमानखण्डिनी
शशाङ्कमौ*लिवन्दिनी धराधरेन्द्रनन्दिनी ।
विकस्वराब्जहासिनी सुपर्वगर्वभासिनी
नितान्तदुःखनाशिनी मुदेऽस्तु विन्ध्यवासिनी ॥ ३८ ॥

कलामिन्दोर्मूर्ध्ना परिवहसि गङ्गा सहचरी
हिमाद्रेरुद्भूता सकलमुनिसन्मानसचरी ।
त्रिलोक्यास्त्वं धात्री सकलगुणपात्रीशतरणिः
यतस्त्वं लोकानां जगति विदिता पापहरणी ॥ ३९ ॥

नमद्विबुधनायिकाविविधबद्धधम्मिलक-
स्थलस्थकुसुमावलीवलयलीनमञ्जीरयोः ।
स्थलाम्बुजनिताश्रयश्रियमलं समाकुर्वतो-
र्भवानि तव पादयोर्वसतु मानसालिर्मम ॥ ४० ॥

---

१. This expression which is almost uniformly handed down as such (except प्रदारिणी for पदारिणी in L) poses difficulty of interpretation.

*—* The MS V drops the text from कबोधिनी to शशांकमौ obviously due to similar endings (मै/मौ)

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

[1]षडास्यः पुत्रोऽभूत्तदनुजगजास्यः स्वयमपि
प्रसिद्धः पञ्चास्यः स्थितिरचलशृङ्गेऽस्ति नियता।
कपर्दीति ख्यातस्तदपि सुखमास्ते पशुपति-
स्तदेतज्जानीमस्तव जननि नैपुण्यमहिमा॥ ४१॥

वसन् भाले किञ्चिद् दहति हुतभुक् नैव सततं
पटीराम्भःसिक्ता भवति फणिफूत्काररचना।
रविर्नेत्रस्थाने शशिशिशिर[2]गात्रः शिवतनौ
फलं त्वेतत् सूते तव जननि सिन्दूरलतिका॥ ४२॥

वलीभङ्गालीढा ललिततरनाभीसरसिका
सरन्ती रोमाली कुचनलिननालीयति तव।
परिभ्राम्यद्भृङ्गावलिललितभावं विदधती
तदाभोगे शम्भोर्जयति वरनेत्रत्रितयिका॥ ४३॥

प्रोद्यत्पादतले बलेन समतां नेतुं निशायां बृहद्-
भानौ भानुसहस्रभाक्षि[3]पदसौ भानुः प्रभाते ततः।
[4]प्रोद्धृत्यारुणमाकलय्य मुदितः पाथोधिपाथोभर-
स्पर्शात् क्षीणविभं विभाव्य गगने तप्तः परिभ्राम्यति॥ ४४॥

पयोराशौ मग्नस्तदनु वरशुभ्राम्बरधरः
कलाभिः संपूर्णः कलिततिलकोऽङ्कस्य मिषतः।
नमस्कारङ्कारं नखशशिनि भावं रचयति
त्वदीयास्ये दास्यं रचयितु[5]मयं शीतकिरणः॥ ४५॥

---

१. शडास्यः G

२. शिरशशि G

३. माक्षि K and V

४. All MSS have प्रोधृत्य which seems to go back to the Author's original script.

५. K drops यितु in रचयितु

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

केशौघाः[१] सुयशः [२]सुमौक्तिकमुरोजावास्यमुद्यद्गुणाः
नेत्रे कज्जलमङ्गमब्जवशकृद् या सुस्वरा, नौमि ताम्।
जम्बूवज्जलबिन्दुवज्जलजवज्जम्बालवज्जालवद्
गङ्गावद्गजगण्डवद्गगनवद्गाङ्गेयवद्गेयवत् ॥ ४६ ॥

त्वदायत्तमेतत्ततं विश्वजालं
तवैवाङ्घ्रियुग्मं भजेऽहं त्रिकालम्।
त्वमेवावलम्बः प्रसादे विलम्बं[३]
किमर्थं समर्थाऽपि मातस्तनोषि ॥ ४७ ॥

अमन्दमकरन्दबिन्दु[४]मदतुन्दवृन्दारक-
प्रमन्ददनुजेन्द्रभृंगगणमञ्जुगुञ्जायितम् ।
जगज्जननि बन्धुजीवसुमबन्धुरं तद् भजे
सदैव ललिते[५] भवच्चरणसारसं मानसे ॥ ४८ ॥

चलद्व्याला बालारुणकिरणजालालससितो-
त्पलोन्मालामाला शशधरकपाला निजजने।
द्विषत्काला कालामलसुवसना लास्यकरवि-
स्फुरद्व्याला[६] हालाहलकवलबालाऽस्तु मनसि ॥ ४९ ॥

---

१. केशौघः would have been a better reading but it is not supported by any MS.

२. Almost all MSS read here स्वमौक्तिकम्

३. L drops बं

४. K has two superfluous letters विन्द after मकरन्द (i.e. मकरन्द विन्द बिन्दु)

५. ललितं G (an equally good reading but outvoted by other MSS).

६. स्फुरद्धास्ता L

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

शिवेला सद्गन्धश्वसितकलिता रूपतटिनी
रिपुध्वंसे वह्नीयति वर-वलग्नेऽम्बरचिता।
मुखाब्जा नेत्रैर्या[१] शिशुरविरुचिर्याज्य[जि ?] धनदा
जने जीयादीश[शा] धृतवसुशरीरा नगसुता॥ ५० ॥

इति नानाविधकविवचनमाकर्णयन्ती देवीस्थानमाश्लिषन्ती काशीम् अनुबद्धभावा जवादभिससार।

इति विविधवचोभिर्वर्णितो विन्ध्यशैलः
परिणतनतमूर्तिर्गौरिवा[२]देशतोऽपि।
निजतटपरिसङ्गाभङ्गभूमीमगङ्गा-
चरणपरिचयेनोत्कन्धरः संबभूव॥ ५१ ॥

॥इति साहित्यपारावारपारीण-कविताकान्तारकण्ठीरव-
सर्वस्वदानदीक्षाविचक्षण-श्रीदीक्षितबालकृष्णसूनु-
शंकरविरचिते गङ्गावतरणचम्पूप्रबन्धे
गङ्गाचरणाङ्कः पञ्चम उच्छ्वासः॥

□□□

---

१. सा GL
२. गौरवा GL

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## षष्ठ उच्छ्वासः



सिन्दूरारुणगण्डमण्डलगलद्दानाम्बुधारामिलन्-
मत्तेन्दिन्दिरसुन्दरारुणरुचिप्राप्तप्रमोदोदयः ।
आरक्तैः किमु जङ्गमैर्विरचितां पुष्पैः शुभामर्हणां
मन्वानो विदधातु मंगलमहो देवो गजेन्द्राननः ॥ १ ॥[1]

अस्ति तावत् सकलवसुमतीचक्रवालचूडामणिविलसद(न)[2]णिमयूखपुञ्जमञ्जुतरमूर्तिः, अमूर्तिरपि समूर्तिः, समस्तवृन्दारकवृन्दवन्द्यमानमानससंसेवितमूर्तिः मूर्तिमन्मुक्तिविलासिनी[3]लास्यसदनं, सच्चिदानन्दपदाभिधेयाभिन्नस्वरूपभिन्नीकृतसमस्तजगदुद्भवमूलस्तम्भतमःसमूहोल्लसितत्रिभुवनम् आनन्दवनाभिधेयम् अविमुक्तसंज्ञाप्रख्यातं काशीवाराणसीतिसमाह्वासमलंकृतं किमपि वस्तुजातम्। यत्र च—

भूरिपापकृततापमातुरं सत्वरं नयति यः स्वकं पदम्।
जीविजातमुपदिश्य तारकं तारकेश्वरकिशोरशेखरः॥ २॥

प्रचुरतरशिलोच्चस्तम्भमूर्धाग्रवंशो-
च्चलतरलपताकाधूननैरग्रहस्तैः ।
लघु परिसर काशीमाह्वयन्तीं भवन्तीं
तरलतरतरङ्गे देवि गङ्गे क्रमेण॥ ३॥

१. This verse is missing in the MS G.

२. An *Emendatio* by the editor, cf. *supra* p. 16, l. 6 and p. 34, l. 4.

३. विलासिलासि K

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

विधिहरिहरलेखाधीशमुख्यालिवृन्दं
परिसृतपरहंसासेव्यमानं समन्तात्।
तव सलिलमरन्दाशोभि काशीसरोजं
जननमरणतापं भूरि दूरीकरोतु॥ ४॥

भवभवभयभाजां स्वर्गतः पातुकानां
पतितजडजनानां मुक्तभावैकदात्री।
स्मरहरसितमुक्तायुक्तशुक्तिस्वरूपा-
मनुभवतु समन्ताद् वारि वाराणसीं ते॥ ५॥

वितरति मणिकर्णी कर्णिकाभावमस्या
विधुरपि शुभनासामौक्तिकाभां बिभर्ति।
त्वमपि रचय मुक्तामालिकाभां विशेषाद्
हिमकरकरगौरैर्बिन्दुभिः सिन्धुकान्ते॥ ६॥

त्वमपि सलिलसङ्घैर्भूषयैनां समन्ता-
दियमपि निजतीर्थैस्त्वां मुदाऽलङ्करोतु।
उभयमिदमशेषं भूतलं लोकशोका-
हरणरचितलोभं भूरिशोभं विदध्यात्॥ ७॥

इति कविवचनौघाकर्णनोत्थप्रमोदा-
कुलितललितचित्ता लोकहृत्तापहारा।
विलसदमृतधाराधारया धारयाऽसौ
समसरदथ काशीं सारवा सा रयेण॥ ८॥

तदा च विविधप्रचलत्तरलतरङ्गा गङ्गा स्वार्थाय प्रार्थयामास—

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

जटा[1]जूटारण्ये निटिलनयनज्वालसविधे
तपस्तप्तं शम्भोरपि च भृगुपातः परिचितः[2] ।
तदेतस्य प्राप्तं फलमपि च वाराणसि भवत्-
कृपादृष्ट्या दृष्टा[दिष्ट्या[3]] तव परिसरेऽहं परिसरे ॥ ९ ॥

काशीं समाश्रितां समस्तलोकाश्रयदां गङ्गां समवलोक्यैव साधुचित्ताश्चैनामित्थं सम्भावयामासुः—

वरुणाशीपरिच्छिन्ना छन्ना मुक्ताविभूषणैः ।
हीरकालंकृता काशी काशते वीचिभिस्तव ॥ १० ॥

गङ्गालवालपूर्णाऽपर्णापर्णा शिवैकसत्कुसुमा ।
काशीकल्पलतैषा फलति सतां मुक्तिमुक्तौघम् ॥ ११ ॥

गङ्गागौरीगोपतिगिरिशगणेशादिगीर्वाणैः ।
यत्सेव्यतेऽतियत्नात्तन्मुक्तिदमुक्तिदा काशी ॥ १२ ॥

वेगाद्वारिधिवामदेववपुषो वात्सल्यभावोद्वहद्-
वारां वायुविहारमावहति या वेलासु वेलासु च ।
विष्वग्विष्णुपदीविभूषितवपुर्वन्दारुवृन्दारकै-
र्वन्द्या वाञ्छितदा विलासिविबुधैर्वर्ण्यैव[4] वाराणसी ॥ १३ ॥

ब्रह्मविष्णुशिवशक्रसुरौघः सर्वदोच्चपदमाप्तुमनस्कः ।
यां समाश्रयति भूमिगता सा सर्वतो जयति नोच्चतरा किम् ॥ १४ ॥

---

१. जरा L
२. चिताः G
३. A conjecture which would suit the form and the context much better.
४. पण्येव K, वर्येव S (not a bad reading at all)

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

तटभुवि भववन्यावासिसंन्यासिवृन्दै-
र्विरचितबहुवादन्यायजातैरनन्या ।
विविधविबुधगण्याऽरण्यवासे शरण्या
भुवि विलसति धन्या काप्यसौ जह्नुकन्या ॥ १५ ॥

कलिन्दकन्याचिकुरौघसन्तति
सीमन्तसिन्दूरततिं सरस्वती ।
तनोति तद्वन्मणिकर्णिकाप्यहो
त्वत्कर्णिकाभावमुपैति सत्वरम्[1] ॥ १६ ॥

स्वर्गस्थसुधा न सुधा वसुधायां वै सुधा काशी ।
कथमन्यथा विषादी शूली चैनां समाश्रयति ॥ १७ ॥

क्षेत्राणि सन्ति बहुशः काशीक्षेत्राधिकं न सुक्षेत्रम् ।
यत्रैकमुप्तमाराद् वपुरमलं चाष्टधा भवति ॥ १८ ॥

आनन्दकाननेऽस्मिन् वसतां का वा भवेभतो भीतिः ।
पञ्चाननोऽत्र निवसति दारितदुरितेभलब्धमुक्तौघः ॥ १९ ॥

वाराणसी भवाब्धावद्भुतकलिता महाशुक्तिः ।
यद्भवमुक्तासंगात् पतितजनानां[2] तदात्मता भवति ॥ २० ॥

---

१. The Manuscript G inserts after this verse the following śloka but strikes it out partially: सन्तीर्णो हि भवार्णवः सुकृतिनां वृन्दैः समाकर्ण्यतां, कर्णे यान् मणिकर्णिकापरिसरे वर्णानपर्णापतिः। अन्ते संकथयन् कथामगमयच्चास्तं समस्तं नृणां, सेयं जन्तुगणैः कथं भवभयात् सेव्या न वाराणसी ॥ This is in fact śloka No 22 of Ucchvāsa VII which has erroneously crept in here.

२. जडानां K

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

तरणेच्छया भवाब्धेः काशीतरणिं समाश्रयत।
यद्दक्षिणकर्णधरो विना तरं तारयति शम्भुः॥ २१॥

मया वारं वारं निजहृदि विचारं रचयता
स्थिरं किञ्चिन्नाप्तं स्थितिरिह भवेद्यत्र मनसः।
अतस्त्वामासाद्य स्थिरतरजनौघाश्रितपदे
पदे स्वीये गन्तुं कृतपरिकरः काशि शिवदे॥ २२॥

स्तुमः कं ध्यायामः कमथ मदनारिप्रियतरे
जपामः कं मुक्त्यै शरणमपि यामः कमधुना।
अतस्त्वामालम्ब्य[1] स्वहृदि निवसामस्त्वयि यतो
विरञ्च्याद्या देवा अपि च तव सेवां विदधते॥ २३॥

क्वचित् समुपसेवितं मुनिजनैर्जराजर्जरैः
क्वचिद् धरणिनिर्जरैरपि च कुत्रचिन्निर्जरैः।
हिमाद्रिगिरिनिर्झरैः क्वचिदराजिराजीवकैः
पुरारिपुरिजीवनं जयति जह्नुजाजीवनम्[2]॥ २४॥

जगद्वृजिनतर्जनं सकलसम्पदामर्जनं
स्वभक्तरिपुभर्जनं गजघटोल्लसद्गर्जनम्।
सदैव जडजीवनन्दमपवर्गराजीवनं
पुरारिपुरिजीवनं जयति जह्नुजाजीवनम्॥ २५॥

---

१. आसाद्य LKV

२. The MS G omits this śloka entirely though perhaps the scribe was aware of its existence and wanted to add it subequently on the margin as the sign of a काकपद after the foregoing śloka proves. However due to some reason the śloka did not ultimately come to be written on the margin.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

अथ विश्वेश्वरो राजा राजधानीमुपस्थितः ।
रराज राजराजेवाविमुक्ते राजशेखरः ।। २६ ।।

यत्र च—

*उल्लसदनेकवर्णमणिगणस्तम्भसंभावितसभाभासुरप्रभाजाललाल्यमान-वियदङ्गणतिरस्कृतकालिकाविलसत्सुराधीशधनुं, विदग्धविलासलास्या-सक्तानेकाप्सरोगणझणझणायमाननूपुरमुखरं, श्रीमद्गौरीचरणपरिचर्या-परायणान्तःकरणसुरसीमन्तिनीगणपरिभ्रमणविलासहास्य[1] संभूषितपरिसरं, क्वचिच्च अलकेव किन्नरीगणगीयमानप्रबन्धं, क्वचिच्च शक्रसदनमिव सुधाधवलं सुरभिसंश्रितं च, क्वचिद्धर्मराजगृहमिव पिशाचबहुलं, क्वचित्पाशिसदनमिव जलजालंकृतं, क्वचिद् ब्रह्मसदनमिव विलसत्परमहंसं, क्वचित्पातालमिव सदानवेन्द्रं स्वालयमलंकुर्वाणं(णः?) सर्वालंकारालंकृतः सदसि नानामणिघटितोच्चसिंहासनं कनकगिरिशिखरं सुधादीधितिरिव अधःस्थितपादकमल-[मलं][2] चकार*—

बहुललिततराभिर्भूरिमुक्त्यङ्गनाभि-
र्विधुतनिजभुजाभिश्चामरैर्वीज्यमानः ।
शशधरनिभछत्रालङ्कृतोऽलङ्कृतश्री-
र्विधृतनृपतिवेषो भाति विश्वेश्वरोऽपि ।। २७ ।।

*तस्मिन्नेवावसरे इन्द्रादयो दश दिक्पालाः स्वस्वाधिकाररूपमैश्वर्य[3]मा-विष्कुर्वाणाः सुरसङ्घटितपादपङ्कजा अपि नानाविधप्रबलप्रख्यात-

---

*—* This entire prose piece (उल्लसद्-चकार) as well as the following one (तस्मिन् to सुरैः on the next page) are missing in the MS G.

१. The MSS K and V drop the words परिभ्रमण and हास्य.

२. Supplied by the editor. It is almost certain that the letters मल reappearing after कमल were dropped in the archetype due to *haplography.* The orignal reading therefore must have been पादकमलमलञ्चकार।

३. Only the MS L has preservad the reading रूपमैश्वर्य (written ऐष्वर्य) etc., wheres all others have °धिकारमाविष्वर्वाणाः।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

प्रमथसार्थसञ्छाद्यमानबहिरङ्गणभूपरिसरं सशङ्कं द्वारदेशभुवमध्यासयामासुः। तत्र चाशिवाज्ञया प्रविशन्तः सह सुरैः*—

*वक्रतुण्डकरवेत्रसंहतित्रुट्यमानमुकुटोत्पलमालाः ।
भूरिखिन्नमनसः सुरसंघाः संस्तुवन्ति मनसा शिवराजम्॥ २८॥

"सुरेन्द्रमुकुटोल्लसन्मणिमयूखनीराजिता
जितारिवरयोगिनां हृदि सदैव धीराजिता ।
जटोच्चलतरङ्गिणीतरलनीरनिर्णेजिता
जिता स्वजनसेविभिर्जयति शाम्भवी पादुका॥ २९॥

चतुर्द्विगुणसिद्धिभिः पदतले रजोभिर्वृता
चतुर्गुणितमुक्तिभिर्विमलकिङ्किणीभिर्युता ।
महत्तनुसुकीलिता विमलचिद्घनानन्दयुक्
विभातु मम मानसे सपदि शाम्भवी पादुका॥ ३०॥

उद्यद्भानुसहस्रभानुविलसच्चिन्तामणीनां गणै-
रानद्धा सुरदारुसाररचिता स्वर्गोरसैर्भाविता ।
तस्माच्चिन्तनदानधारणपरा मुक्तौघसारान्तरा
नित्यं चित्तचमत्कृतौ विलसतां श्रीशाम्भवी पादुका"॥ ३१॥

संघशः समभिसृत्य सुरेशा
यत्नतश्चरणपङ्कजमारात्।
दण्डवन्निपतिता क्षितिपृष्ठे
संप्रणेमुरसुरैः [°मुरुरसा?] शिवराजम्॥ ३२॥

---

*—* The MS G has a great *lacuna* here as the verses 28 to 36 (as well as the preceding prose piece on p. 90) are entirely missing in its text. Otherwise also the text shows a great confusion here.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

किञ्चित् कृपाकटाक्षेण शिवराजेन वीक्षिताः।
स्वस्थाः स्वासन[१]मासीनाः संबद्धकरकुड्मलाः ॥ ३३ ॥

तदोवाच महातेजाः शिवराजो गिरं शुभाम्।
राजाधिराजराजाभः प्रसन्नाम्बुरुहेक्षणः ॥ ३४ ॥

सर्वे भवन्तो दिक्पालाः पालयन्तः पुरीमिमाम्।
आयान्तु मम पूजार्थं पुरुहूतमुखाः सुराः ॥ ३५ ॥

अधिकारप्रयुक्तानां न कालनियमोऽस्ति मे !
स्वाधिकारभवं कार्यमाख्यापयितु[२]मन्वहम् ॥ ३६ ॥*

विलसतु मम पुर्यामन्नदानेऽन्नपूर्णा
सुरभिसलिलदाने देवसिन्धुर्नियुक्ता।
निजभजनरतानां विघ्ननाशे गणेशो
विलसतु किल दुर्गा दुर्गतिध्वंसनेषु ॥ ३७ ॥

बहुतरधनदाने विष्णुकान्ता नियुक्ता
वचननिचयहेतौ[३] वागधीशा विशेषात्।
[४]वृजिनयुतजनानां दण्डने दण्डपाणिः
दृढतरदुरितौघोत्सादने भैरवोऽपि ॥ ३८ ॥

---

१. This is an *Emendatio* since all the MSS invariably read : स्वस्थानासन°

२. °परतु V, °पइतु L

३. Though हेतोः would have been a better reading, yet Locative is preferred in view of its ubiquitous appearance.

४. वृजिन G

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

मुनिजनजपसिद्धौ यत्र सिद्धेश्वरीयं
विलसति किल यस्यां सङ्कटा सङ्कटेषु।
सकलभुवनराज्ये राजराजेश्वरीयं
जननमरणदुःखध्वंसने काशिका च॥ ३९॥

जननमरणदुःखध्वंसनेच्छास्ति येषां
शमनसदनपीडाव्रीडभावं गतानाम्।
भवभुजगविभीषाव्याकुलानां समन्ताद्
विलसदभयसत्त्रं संदधे काशिकायाम्॥ ४०॥

त्रिभुवनवनजातैः पापतापाकुलाङ्गै-
र्भवभवभयभीतैरासितव्यं सुखेन।
पतितजडजनानां रक्षणे दीक्षितोऽहं
प्रकटितमिति डिण्डीरावमुच्चैश्चकार॥ ४१॥

ततः—

असन्तः सन्तो वा त्रिभुवनगता ये शिवपुरीं
समासेवन्ते ते निजनिजविमुक्त्यर्थमनिशम्।
तथा षड्वर्गोऽयं प्रचुरतरकामादिसहितो
ऽप्यहङ्कारो दम्भान्वितवपुरुपास्तेऽभवकराम्[१]॥ ४२॥

गोव्याघ्रं सिंहकलभं भुजङ्गनकुलं यथा।
मुनीनामाश्रमे नैजं वैरं त्यक्त्वा समासते॥ ४३॥

---

१. All MSS however read भवकराम्

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

बहुतरधनभावालब्धसंस्थानदुःस्थाः
स्थगितगतिविशेषाद् भाटकान्वेषिणस्ते ।
अथ कथमपि भिन्नीभूय भूयो जनानां
वसतिकृतनिवासास्तस्थुरत्यादरेण ॥ ४४ ॥

क्वचिल्लोभोऽवात्सीत् प्रचुरतरसंकोचकलितः
तथा दम्भोऽवात्सीन्निभृततरमाकुञ्चितवपुः ।
तथा कामः कान्ताकलितमनुजानां गृहवरे
निवासं चक्रुस्ते क्वचिदपि च तस्मिन् पुरवरे ॥ ४५ ॥

तत्र वञ्चकत्वं व्यापारिवणिग्जनभवनेषु। पाटच्चरत्वं कार्य-नियुक्तभृत्यजनेषु। अस्नेहत्वं बान्धवजनेषु। परवित्तापकर्षकत्वं राजाधिकारिषु ॥

चत्वारश्चाश्रमा वर्णास्तथा युगचतुष्टयम् ।
शिवाज्ञया स्व-स्व-धर्मं पालयन्तोऽवसन् सदा ॥ ४६ ॥

कालकालकमनीयकथाभिः
क्रान्तकर्णकुहराः कविकल्पाः ।
कालयन्ति कलिकल्मषमाराद्
यत्र साधिकतरा किल काशी ॥ ४७ ॥

किमु सुरवरिवस्या किं तपस्या समाधिः
किमु सपदि रहस्यालोचितो मन्त्रवर्गः ।
जननमरणदुःखान्याशु नानाविधानि
क्षपयति भुवि यद्वद् राजधानी शिवस्य ॥ ४८ ॥

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

भवभयमपहर्तुं जन्मृत्युं प्रतर्तुं
निजसुखमनुसर्तुं चेद्विशेषाभिलाषः।
तदभिसर धरण्यामाशु काशीं शरण्यां
परमसुखवदान्या का वदान्यास्ति लोके॥ ४९॥

या खलु शक्रपुरीव सुधर्माश्रिता मन्दाकिनीकलिता च। संयमिनीव दण्डपाणिकलिता सचित्रगुप्तमन्त्रिप्रवरा च। प्रतीचीव सवरुणा नर्मदाशरणा च। अलकेव धनदसेविता त्र्यम्बकप्रिया च। पातालमिव कर्कोटकादिसहिता सदानवसदनभूषिता च। ब्रह्मसदनमिव परमहंससेविता श्रूयमाणश्रुतिघोषणा च। वैकुण्ठमिव जय-विजयसेविजनसंवृता विमानालंकृता च। रामसेनेव हनूमत्कलिता, अयोध्यान्विता च। राजाङ्गनेव चतुःषष्ठिकलासमन्विता,[१] सूर्यलोक इव सलोलार्का, प्रकाशबहुला च। उत्तरादिगिव सन्मानससेविता पुष्करान्विता च। *क्षुद्रनृपराज्यस्थितिरिव दुर्गाश्रिता। मत्स्यमूर्तिरिव शंखोद्धाराकलिता, वेद-स्थापनपरा च।* विष्णुपुरीव लक्ष्मीनिवासालंकृता। यमपुरीव कृमि[२]कुण्डा-न्विता। वाराङ्गनेव सुकामाक्षासेवितमूर्तिः। कैलासभूमिरिव सवृषा, सगुहा च। महाविद्येव त्रिपुरभैरवीकलिता। कृषीवलभूमिरिव केदारसंघट्टान्विता। वाराङ्गनेव ललिताघट्टनपरा। प्रयागभूमिरिव दशाश्वमेधकलिता। राजमहिषीव समणिकर्णिका। जनकतनयेव रामघट्टनपरा। जराराक्षसीव जरासंधसंघट्टपरा। हरमूर्तिरिव दुर्गाघट्टपरा। नारायणनाभिसरसिजमिव ब्रह्मघट्टकलिता, कविगुरुबुधकलिता च सुधर्मेव। शक्रपुरीव स्वर्गद्वाराकलिता। राजाङ्गनेव अन्तर्गेहाकलिता। वैकुण्ठमिव नानाविनायककलिता। भूतसेनेव सवक्रतुण्डा। दक्षिणादिगिव व्यङ्कटेशसेविता। समुद्रोदरमिव शेषशायिकलिता। समुद्रमिव[३]

---

१. The MS G adds च after समन्विता।

*—* The text piece 'क्षुद्रनृप— परा च' is preserved only in the MS G and has been lost in all others.

२. क्रिमि KVS

३. Read समुद्र इव. The word समुद्र is never used in neuter gender.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

अनेकनदान्विता। हिरण्यकशिपुकायमिव नृसिंहदंष्ट्राकलिता। कान्तारभूमिरिव चोरसंघट्टपरा। दुर्गेव महिषासुरसंघट्टपरा। घोष इव गोसंघट्टपरा। नृसिंहमूर्तिरिव प्रह्लादसंघट्टपरा। एवं सर्वोपमाकलिताऽपि निरुपमा शिवराजधानी, यस्यां च संख्यावन्तोऽप्यसंख्यावन्तः, यत्र शाब्दिकाः सूत्रगणविचारिणोऽपि न तन्तुवायाः, सन्निपातप्रिया अपि न सन्निपातप्रियाः, लौकिकालौकिकविग्रहकर्तारोऽपि न विग्रहकर्तारः—

संधिविग्रहकर्तारो गुणवृद्धिविभाविनः।
स्त्रीप्रत्ययपरा यत्र शाब्दिका दधति श्रियम्॥ ५०॥

अपशब्दपरित्रस्ताः सिद्धशब्दानुसारिणः।
विकल्पार्थपराश्चैव धातुवादविचारिणः॥ ५१॥

सत्कर्मकारकपराः समासव्यासकारिणः।
तद्धितार्थविचारेषु बहुयत्नसमन्विताः।
आख्यातार्थकृतोद्योगाः सत्कृत्यार्थपरिग्रहाः[१]॥ ५२॥

अव्युत्पन्ना शब्दशास्त्रे व्युत्पन्नाश्च तथापरे।
विराजन्ति महीपृष्ठे शब्दा औणादिका इव॥ ५३॥

यस्यां च—

घटपटादिपदार्थविचारिणः
सकलकारणकार्यकृतश्रमाः।
सदनुमानपरा अपि सत्वरं
बहुसपक्षविपक्षविभाविनः ॥ ५४॥

---

१. The second line (pādas c and d) of this verse seems to have been lost unless we associate it with the foregoing or the following verse.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

क्वचिदहो व्यभिचारविचारिणः
कुहचिदेव निजार्थकृतश्रमाः ।
बहुपरार्थपरा अपि कुत्रचिद्
विदधति श्रियमाकुलतार्किकाः ॥ ५५ ॥

यस्यां च–

वेणुदण्डकरकाद्यलंकृताः सद्गृहस्थजनतानिमन्त्रिताः ।
सर्वदा 'हर-हरे'तिवादिनः संचरन्ति यतयोऽप्रमादिनः ॥ ५६ ॥

सकलमेतदहो परमार्थतः किमपि नास्ति यदस्ति तदस्ति वै ।
इति वदन्ति दिवानिशमप्यहो तदपि चार्थपरायणमानसाः ॥ ५७ ॥

वेदान्तवादिनो दान्ताः सदन्ताय कृता[त] श्रमाः ।[१]
संन्यासिनोऽर्थबहुलन्यासिनः पाठयन्त्यमी ॥ ५८ ॥

सुरसरिदनुतीर्थं तीर्थभूताः पुरारेः[२]
पुरि निजपरिचर्याचारिणः शिष्यसंघान् ।
विविधवचनदीनं[°नान् ] भूरिवैराग्यहीनं[°नान् ][३]
जनमनसि पवित्रं शास्त्रमध्यापयन्ति ॥ ५९ ॥

यत्र च–

अधिकरणचरित्रं मन्त्रसंस्थापवित्रं
परिचितबहुमन्त्रन्याय[न्यास]जातैर्विचित्रम् ।
रचितकलुषशोधं दुःखबोधं जनानां
नियमितविधिरोधं शास्त्रमध्यापयन्ति ॥ ६० ॥

---

१. मदंताप्रकृतअमा V.

२. G reads तीर्थ तीथं तीथभूता (without विसर्ग in the end.)

२. This emendation would suit the context better since a पवित्रं शास्त्रं cannot be वचनदीनं and वैराग्यहीनम्.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

मीमांसकाश्च मीमांसाशास्त्रसंसक्तमानसाः।
साहसेन क्रियाकाण्डे वेदं ताण्डवयन्त्यमी ॥ ६१ ॥

संख्यावन्तो ह्यमी योगसांख्यपातञ्जलादिकम्।
अध्यापयन्ति वचसा, मनसा नानुभाविनः ॥ ६२ ॥

ते नरा दुर्लभतरा ये शास्त्रार्थानुभाविनः।
मृगयन्तोऽपि तान् सन्तश्चिन्तासन्तितितत्पराः ॥ ६३ ॥

ज्ञानतोऽभ्यस्तपापानां प्रायश्चित्तानि चिन्वते।
काशीं भागीरथीं हित्वा निबन्धेषु निबन्धतः ॥ ६४ ॥

पश्चात्तापविहीनानां प्रायश्चित्ताय सत्वराः।
पावितुं विविधोद्योगा धर्मशास्त्राधिकारिणः ॥ ६५ ॥

तर्ककर्कशधियः प्रतिपक्ष-
क्षेपणाथ परिकल्पविकल्पान्।
धर्मशास्त्रगतमर्थमशेषं
वक्तुमुत्सुकतरा बुधधुर्याः ॥ ६६ ॥

वैद्या अपि प्रचुररोगविनाशनाय
नानौषधानि नियतं समुपार्जयन्ति।
व्याधेर्विधूननविधौ विविधप्रकारा-
नातन्वते तदपि ते वितता भवन्ति ॥ ६७ ॥

(यत्र च दैवज्ञाः)[१]—

---

१. Supplied by the Editor.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

अवग्रह[१] विचारिणोऽपि नवग्रहविचारिणः, लीलावतीसेवनतत्परा अपि न समुत्सृष्टबीजाः, नानाङ्क[२] विचारकलिता अपि नाङ्कसंकुला, भूतभविष्यद्वेत्तारोऽपि स्वगृहस्थितिव्याकुला, भूगोलसेवनपरा अपि खगोलविचारिणः –

ज्योतिर्विदश्च गणनाकलनाविधिज्ञाः
सर्वे नवग्रहविचारपरायणाश्च ।
भूतं भविष्यमथ केनचिदेव पृष्टे ।
कष्टेन ते कथमपि प्रविचारयन्ति ॥ ६८ ॥

यत्र वै करगृहीतचम्बुकाः[३] शम्भुपूजनकृते सुरालयम् ।
संविशन्ति किल यत्र साक्षताः साक्षरा[४] अपि च केऽपि भूसुराः ॥ ६९ ॥

यत्र शम्भुसदनेषु सारिकाः, कीर्तयन्ति निगमार्थकारिकाः ।
यत्र कीरनिकरा अपि ध्रुवं, कीर्तयन्ति हि [सदा][५] मुदा शिवम् ॥ ७० ॥

मन्दाक्षमन्दाक्षरमुद्गिरन्ती सत्तारकेशं स्वकृतप्रबन्धैः ।
समर्चयामास सरोरुहाक्षी यतिं स्मितं[६] वीक्ष्य च संचुकोच ॥ ७१ ॥[७]

यत्र च–

---

१. नवग्रहं **G**

२. मानाङ्क **KVS** (an admissible reading)

३. चन्द्रिका **S**

४. It is highly tantalising to postulate here the original reading as राक्षसाः (corrupted into साक्षराः by *metathesis*) because it would go so well with भूसुराः and create a nice विरोधाभास !

५. Supplied by the editor (an outright conjecture). Two letters have got lost here in the MSS.

६. स्थितं **KS**

७. The MS G drops this as well as the following verse altogether.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

शिवालयेषूर्ध्व[१] विलम्बितानां
कुप्यं समाशोध्य विनिर्मितानाम्।
शब्दस्तदाऽश्रावि सुघण्टिकानां
ठठं ठठं ठं ठठठं ठठं ठः ॥ ७२ ॥[२]

दारका अपि च काव्यकारकास्-
तारकाधिपतिशेखरं हरम्।
गद्यपद्यरचनाभिरन्वहं
संस्तुवन्ति भवमेव पापहम् ॥ ७३ ॥

बालिका अपि च शालिकान्तरे
सूक्ष्मनिर्मितगृहाः कुतूहलात्।
खेलयन्ति शिवयोर्विवाहजं
सन्महं तदनुकारिबालकैः ॥ ७४ ॥

सञ्चरन्ति वृषभास्त्रिशूलिनः
सज्जटा अपि वटादयो द्रुमाः।
यद्गृहा अपि शशाङ्कशेखराः
का ततोऽधिकतरा पुरां वरा ॥ ७५ ॥

यत्र च—

नानाविधोपमाकलिताः, उपमेयोपमान्विताः, अनन्विताः, प्रतीपार्थरञ्जिताः, सुरूपकाकलिताः, सोत्प्रेक्षाः, उल्लेखनचतुराः, प्रकटनिदर्शनाः, तुल्ययोगिता-

---

१. °लये मूर्ध्व KV

२. The MS G drops this verse as well. It seems that both these verses (71 & 72) are later interpolations since verse 73 looks like a natural continuation of the verse 70, both in metre and in content. The verse 72 is a समस्यापूर्ति anyway.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

विभावनाचतुराः, सदृष्टान्तोक्तयः, समासोक्तिकलिताः, अप्रस्तुतप्रशंसासक्ताः, प्रस्तुताङ्कुरिताः, तद्गुणकलिताः, अपूर्वपूर्वरूपकाकलिताः, सोल्लासाः, ललितालङ्कारशालिन्यः, लोकोक्तिविचारिण्यः कामिन्यः सदीपकाः कार्तिकस्नानार्थं पञ्चनदघट्टमवतरन्ति, सत्कविकविताश्च प्रसरन्ति—

असित-सित-हरिद्भिः शोणिमानं दधद्भि-
र्ललितकुसुमसंघैः संवृताङ्गी समन्तात्।
लघुतर-गिरियुग्मालंकृताऽलोकि लोकैः
सुरसरिदनुतीर्थं जङ्गमा हेमवल्ली ॥ ७६ ॥

यत्र पंकजसहोदरानना माधवार्चनविधिं वितन्वती।
श्रीफलोल्लसितभासुरस्तनाभोगभावितसुहृत्तमा निशि ॥ ७७ ॥

फुल्लपद्मवदना मृगेक्षणाः शास्त्रकाव्यरचनाविचक्षणाः।
सुस्वरैर्मधुरगीतिभिर्हरं संस्तुवन्ति शिशुचन्द्रशेखरम् ॥ ७८ ॥

सूर्योऽस्तमेष्यति शमिष्यति रुक्प्रपञ्च-
श्चन्द्रोऽभ्युदेष्यति हसिष्यति कैरवश्रीः ।
कोशस्थितेऽलिनि विचिन्तयतीन्दुमौलि-
मौल्यर्पणात् कुमुदकुड्मलमुल्ललास[१] ॥ ७९ ॥

---

१. This verse is conspicuous by its absence in the MS G. Though not fitting so well in the context, it has a high amount of poetic beauty and seems to have been inspired by the following famous *subhāṣita :*
रात्रिर्गमिष्यति भविष्यति सुप्रभातं, भास्वानुदेष्यति हसिष्यति पंकजश्रीः।
इत्थं विचिन्तयति कोशगते द्विरेफे, हा हन्त हन्त नलिनीं गज उज्जहार ॥
The use of अलिन्, incidentally, (in Loc. Sing. अलिनि) by the author as against the common word अलिः testifies a very good command of Sanskrit vocabulary. This word (अलिन् = black bee) is first found to be used by Māgha in his *Śiśupālavadham VI.* 6 which the author must have read with care.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

उषसि देवधुनीकृतमज्जनाः
परिसमाप्य यथाविधि सज्जनाः।
नियतसांध्यविधिं शशिशेखरं
निजहृदा कलयन्ति महेश्वरम् ।। ८० ।।

कोटिशः शमनशान्तिकारिका मोक्षमार्गगमनप्रकाशिका।
यत्र मोक्षललनाविकाशिका काशिका जयति सौख्यराशिका ।। ८१ ।।

यत्र तूलकृततन्तुवर्तिका मृत्तिका-विविधधातुपात्रकाः।
तैलभृत् घृतसुपूरपूरिता दीपिता अपि च दीपका निशि ।। ८२ ।।

गङ्गातरङ्गतरसत्तृणवेणुकूट-
संबद्धसत्कटकसंघगतो विभाति।
दीपोत्करो जलपथागतपन्नगीनां[१]
मूर्धन्यरत्ननिकरः सरिसर्ति[२] शंके ।। ८३ ।।

अपि च–

अथ निजमधिकारं पालयित्वा विशेषात्
क्षितितलमवतीर्णः पञ्चगङ्गावलोकम्।
कलयितुमिह मन्येऽन्ये वदन्त्वन्यदन्यद्
दिनकरकरसंघोऽसंख्यदीपच्छलेन ।। ८४ ।।

स्थलजलगतदीपभ्रान्तिभाजां नराणा-
मिह कथयति शम्भुः पश्यत ज्ञानदृष्ट्या।
स्थिरचरवरजीवान् मुक्तिभावं प्रपन्नान्
सुललिततरतेजःपुञ्जरूपानमुत्र ।। ८५ ।।

---

१. सर्पिणीनां G
२. रि dropped by the scribe in G.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

विविधमणिसमूहस्वर्णमुक्तामयीयं
विलसति वसुधायां काशिकेति प्रसिद्धिम्।
अनुभवपथमारान्नेतुमूर्जे जनानां
निजसुललितमूर्तिं दर्शयत्याशु काशी॥ ८६॥

बाहुले बहुलपक्षरजन्यां यां बिभर्ति सुषमां भुवि काशी।
तां वशीकृतजगत्त्रयजीवां वर्णयेत् कविवरो यदि शेषः॥ ८७॥

त्रिभुवनवनजातं वस्तुजातं यदेतत्
तदखिलमिदमूर्जे दृश्यते प्रातरत्र।
सुरसरिदनुरोधःप्रान्तभूमौ निविष्टं
हरिजठरगतं सद् वस्तुवद् दृश्यमत्र॥ ८८॥

तत्र कामादयोऽप्येते तद्विलोकनकौतुकात्।
संच्छाद्याधिगतं रूपमासेदुर्जनतान्तरे॥ ८९॥

केचित् काममपि कामिनीं निजकरैरालिङ्ग्य दूरं गताः
केचित् किञ्चिदचूचुरन् चरणतोऽलङ्कारभूषादिकम्।
केचिद्वञ्चनतत्परा सुवचनैराच्छाद्य नैजं मनः
कण्ठस्थामपि कर्तयन्ति ललितालङ्कारमुक्तास्रजम्॥ ९०॥

[१]एतस्मिन्नेव समये पिशंगाङ्गी दिगप्यभूत्।
हरेररुणसंभासां काशयन्तीव काशिकाम्॥ ९१॥

---

१. येतस्मिन् G

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

पुरन्दरपुरन्ध्रिकादिगवकुण्ठ[१] कौसुम्भका-
रुणाम्बरविभास्वरं हरकलत्रपादारुणम्।
समुद्यदुदयाचलद्विरदकुम्भसिन्दूरितं
प्रभातसमयोद्भवज्ज[२]यति भानवीयं महः ॥ ९२ ॥

अरुणतरुणतेजोद्भासिमुक्ताफलेषु
प्रथयति बहुगुञ्जापुञ्जबुद्धिं जनानाम्।
भसितकलितदेहान् भूरिसंन्यासिनोऽपि
प्रकटयति तटेऽस्याः कुङ्कुमालिप्तदेहान् ॥ ९३ ॥

अहो प्रभातरमणीयता प्रभातरलमणीयता अम्बरमणिकर-किरणेन[३] [निकरेण] करम्बितस्य कमलकलापस्येव जगज्जालस्य! शरद्विकच-कुसुमसमूहसुरभितगलदमलजललसदलिकुलकलकलकलितकमलकुमुदकुलच-लदल[४]दरलालनललितरतरलतरतरङ्गसंगीतनर्तनगुरुरगुरुसुरभितवातजातः सुरभ-यति गंगापरिसरम्। संप्रति—

---

१. अवकुण्ठ seems to be a mistake (committed by the poet himself ?) for 'अवगुण्ठ' (cf. अभिज्ञानशाकुन्तलम्, Act V between śl.18 and śl.19 'वत्से अपनेष्यामि तावत् तेऽवगुण्ठनम्') meaning the veil before the face (Hindi घूँघट).

२. °योल्लसद् VK योलुसद् L. I have opted for the reading उद्भवद् provided by the G even against the testimony of the majority since I believe that the sense of the sentence is incomplete without a word like उद्भवद् and secondly उल्लसद् and जयति have almost the same poetic meaning.

३. किरणेन is almost certainly a corruption for निकरेण since कर and किरण are totally synonymous and also otherwise the word in singular (= a single ray) does not give here any good sense.

४. An *Emendatio* by the Editor for दलचलददलदल supplied uniformly by all MSS.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

दलत्पद्मश्रेणीगलितमकरन्दामलजलै-
रलं स्नाताः किञ्चित् कुसुमरजसा लिप्ततनवः।
स्वरैर्गायन्तस्ते मधुरमधुरं भैरवरवं
विलोक्यन्ते भृंगाः किमुषसि जपासक्तमनसः ॥ ९४ ॥

यातः पश्चिमपर्वतं द्विजपतिस्तत्कालमालम्बितुं
प्रातर्बुद्धगजेन्द्रगर्जनलसत्तूर्यारवः श्रूयते ।
सत्काश्मीरजवारिसिक्तमिव यद् भूभीतलं वर्तते
भानोः पूर्वदिगङ्गनापरिणयः सोऽयं जरीजृम्भते ॥ ९५ ॥

सरोजालीजालीभवदलिकुलालीकलरवैः
कलं गायन्तीव प्रचुरमुदमाविःकलयति।
तथा मन्ये धन्ये समुदयपदेऽभूद्दिनमणि-
स्तमस्तोमो[१] ताम्यत्त्रिजगदगदङ्कारकिरणः ॥ ९६ ॥

ततश्च उदयाचलचूडचुम्बिभानुमण्डलमवलोक्य अनर्घमर्घपूर्वकं सान्ध्यविधिं परिसमाप्य,[२] एवं च कार्तिकविधिमवसाय्य आग्रहायणिके परमाग्रहेण सर्वे पौरजनाः—

---

१. All the MSS read, against the rules of संधि, तमस्तोमो ताम्यत् which seems to be a corruption for तमस्तोमं ताम्यत्.

२. The MS G has a big *Lacuna* at this point due to which the entire text-piece from here upto śl. 107 (the penultimate verse of the present ucchvāsa) is totally missing.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

कलिकलुषकलाभिः कामकोपाकुलाभिः
कलुषितधिषणाभिर्भीषणाभिः कृतांहः[१]।
प्रचुरविविधशीलैः शीलितेयं समन्तात्
सहसि हरति पञ्चक्रोशिका काशिकायाम्॥ ९७॥
इति मनसि विधाय प्रातरुत्थाय कृत्वा
निजनिजपरिचारं भारहारं पुरस्तात्।
अथ कथमभिसस्रुर्बद्धपाथेयसाराः
करलगुडविहारा लोकधारापथेन ॥ ९८॥
कथमपि च विलम्ब्य व्याकुलः कोऽपि लोकः
परिकरमपि कृत्वा कम्बलं शम्बलं च।
द्रुततरमथ धावन् धूनयन् हस्तपादं
दिवसयुगलकेनाहं गमिष्येत्य[२]वोचत् ॥ ९९॥
विविध-वीवधवा[°धका][३]हितदारि[र]काः
समभिसस्रुरमुं परिचारिकाः।
निखिलखर्वटखेटनिवासिनः
समसरन् स्वजनोद्धुरहासिनः॥ १००॥

---

१. This compound (कृतम् अंहः) in which the past participle and the object of the sentence coalesce, is not a happy one. L. reads कृतांहा (कृता अंहा) here which is grammatically better though the existence of the word अंहा in Fem. is not attested by the Kośas.

२. Pāṇini does not approve of such double संधिs which are however found sporadically in the epic Sanskrit of Rām. and Mbh. (e.g. ववृधे—व्याधयोपेक्षिता इव, Rām. Uttarak. V. 8, Gita Press; प्रियायार्हसि देव सोढुं Mbh. Bhagavadgītā XI. 44). The author first changes गमिष्ये इति into गमिष्य-इति and than joins the two into गमिष्येति(अवोचत) which is not permissible.

३. विवधम्, वीवधम् or वीवधकम् is a load carried by porters etc. on their back or shoulders with the help of a strap. (cf. Pāṇini IV. 4. 17 and Śiśupālavadham 2, 64). Lady porters are carrying children on their back tied with the help of a piece of cloth.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

इति विविधविमर्दव्याकुलो लोकसङ्घः
प्रथमवसतिभूतं कर्दमं भूतनाथम् ।
अहमहमिकयाग्रे पातुकः संप्रणम्य
प्रथमवसतिभूतं स्थानमासादयित्वा ॥ १०१ ॥

कथमपि निजवर्ग्यानाजुहाव प्लुतेन
प्रचलतरशयाग्रैरुद्धुरैः सुस्वरेण ।
निजपटकुटिकाभिः पूर्णमन्तः पलालै-
र्निजनिवसतिभूतस्थानमभ्याजगाम ॥ १०२ ॥

द्रुततरमथ तीर्थस्नानमासाद्य सद्यः
सुललिततरपाकव्याकुलः सर्वलोकः ।
कथमपि रचयित्वा, हस्तपात्रै[दै]र्विचित्रा-
नतिथिविभव[१]भूतांस्तर्पयित्वा भुनक्तः [=क्ति] ॥ १०३ ॥

सद्दक्षिणास्वकुलभूषणभूतभूमी-
भूषायमान[ण] विभवैर्भवभक्तिभावैः ।
भूमीसुरैः सममिशोभि यशोभिरुच्चै-
र्द्रव्यैः प्रदोषसमये किमु सांध्यमेघैः ॥ १०४ ॥

दूराद् दूरतरा[रं] पलायनपराः पाटच्चराणां वरा
गर्जद्दुन्दुभिघोरसद्भज्झघटाघण्टारवव्याकुलाः ।
संत्रस्तास्तृणभारधारणपरव्याजेन संछादिता
बद्ध्वा तानथ ताडयन्ति नितरां क्रूराः कृतान्तादपि ॥ १०५ ॥

---

१. विमल VK

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

अथ विविधकथाभिः शास्त्रकाव्यादृताभिः
स्मरहरचरिताभिः काशिकासंश्रिताभिः ।
सुरसरिदवतारध्वस्तपङ्कावलीभिः
कलितकुतुकजालैः[1] कालयन्ति स्म रात्रीः ॥ १०६ ॥

एवं पञ्चदिनैः पञ्चक्रोशयात्रां विधाय ते ।
विश्वेश्वरं समभ्यर्च्य स्वं स्वमाजग्मुरालयम् ॥ १०७ ॥[2]

निजनिजविधिजातं वेदजातं प्रयत्नात्
क्षणरचितसमाधिध्यानपूर्वं समाप्य ।
सपदि समभिजग्मुः स्वान् गृहान् भूरिगङ्गा-
चरणनतिमनस्का भास्कराभाः जनास्ते ॥ १०८ ॥

॥इति साहित्यपारावारपारीण-कविताकान्तारकण्ठीरव-
सर्वस्वदानदीक्षाविचक्षण-श्रीमद्दीक्षितबालकृष्णसूनु-
शङ्करविरचिते गंगावतरणचम्पूप्रबन्धे
गंगाचरणाङ्कः षष्ठ उच्छ्वासः ॥

□□□

---

१. जातैः VK

२. The text upto here, as remarked earlier, is missing in the MS G. It is possible that this whole text-piece which describes the पञ्चक्रोशी यात्रा of Kāśī by the pilgrims has been added later to the text and the MS G represents the older shorter version, as in many other cases too.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## सप्तम उच्छ्वासः



प्रोद्यच्चारुपयोधिभासिततरौ पद्मार्चनोल्लासिनौ
हर्षोद्भासिविनायकावहिवरोद्धारौ कलापाङ्कितौ ।
यत्नाद्भूधरभूधरौ धनदहृत्प्रेमप्रवाहप्रियौ
हृत्सौख्यानि वृषाकपी वितनुतां पुष्पेषुदेहप्रदौ ॥ १ ॥

ततश्च सकलं स्नानविधिमवसाय्य विविधविबुधजनसंघट्टो निजनिज-घट्टमधिरुह्य शिवालयेषु शिवमभ्यर्च्य—

*श्रीकृष्णः कृत्यकृत्यो[१] निजभजनजड[न][२]स्यावनीवन्द्यवन्द्यो
मां पायात् पापपाटी[यी ?] भटविटनटनाग्रेसरः सत्यसन्धः ।
शम्पावत् पादपानामरिगिरिकरिणां मानदानप्रनद्धः
गोपाटोपासु पाता सुरवरवरदो दोष्णि संस्थापितश्रीः ॥ २ ॥

इति नानाविधमनोहरहारं विरचय्य बिन्दुमाधवमानर्चुः ।*

---

*—* The text between these two asterisks is not found in the MS G

१. Read कृत्यकृद् यो.

२. निजभजनजड: does not yield any proper sense, hence I venture to suggest निजभजनजन:as a conjectural reading prompted by the obvious predilection of the poet for alliterations.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

पूजयन्ति कमलापतिं कलक्वाणकङ्कणरवैः करैर्हरिम् ।
कोमलैः कमलकैरवोत्करैः कामकामशमनाय कामुकैः[कन्यकाः][1] ॥ ३ ॥

ततश्च स्वपौराणिकावस्थितस्थानान्यधिजग्मुः ।

सभाजनाय व्यासस्य सभाजनकराः परे ।
सभाजनमुपासेदुः सभाजनकथोत्सुकाः ॥ ४ ॥

तत्र च—

नानाविधराजकम्बलविराजमानास्तरणविस्तृतानि स्वस्वस्थलानि उपविविशुः । ततश्चोच्चतरसिंहासनसमधिरूढं भानुमन्तमिव नानाविधकथाकथनचतुरास्यं चतुरास्यमिव नानाविधार्थ[2]कल्पनातत्परं सकलजनमनोरञ्जनानुरूप-[3]वचनरचनाचतुरं, सत्काव्यमिव नानालङ्कारसमलंकृतम्, अमृतमिव नानारससंभावनाकलितं पुराणवक्तारमभ्यर्च्य समभिविविशुः स्त्रियः पुरुषाश्च ।

सत्कथार्थकथनेषु तत्पराः भावदर्शनविधौ [4]लसत्कराः ।
सस्वरा रसविभावनापराः तारणाय भवसागरान्नरान् ॥ ५ ॥

---

१. The reading कामुकैः is grammatically unacceptable. We need a nom. pl. (कामुकाः ?) here. However an expression denoting 'ladies' or 'young girls' (e.g. कन्यकाः) would suit the context much better. Young damsels even today offer worship to Viṣṇu for getting married early. The conjectural reading कन्यकाः is beautifully supported by कलक्वाणकङ्कणरवैः कोमलैः करैः ।

२. विविधार्थ (for नानाविधार्थ) L, विधार्थ KSV (नाना was first dropped in The Y group of MS. The L thereupon added a वि before विधार्थ to make it विविध in order to get a sense out of it whereas KSV continued the older defective reading)

३. मनोहरं जनानुरूपं KSV

४. G drops स in लसत्

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

कालयन्ति कलिकालमाकुलाः कामकामशमनार्चने रताः।
कामनीयककथाकलितांगाः कामनीयककथाः कथयन्ति[१] ॥ ६ ॥

श्रोतारश्च—

तत्कथार्थमवलभ्य सुखाढ्या
ते ततोऽप्यधिगतार्थसमूहाः।
तोषमापुरुभये विभवेन
स्त्रीजनोऽपि निजमर्थमवाप ॥ ७ ॥

शाकपत्रनिचयं रचयन्त्यः
सत्कथार्थश्रवणेन हसन्त्यः।
वाचकाननविशेषविलोके
वक्रितास्यकमलाः कमलाभाः ॥ ८ ॥

लड्डुकांश्च-दलिया-घसोटिया-चोटिकाप्रभृतिकान् विरचय्य।
स्थापयन्ति पुरतः सुरताभाः वाचकस्य किल गुर्जरवध्वः ॥ ९ ॥

गोमुखीगतकरेण मालिकावर्तनं विरचयन्त्यपराश्च।
तत्र भाति विधवाजनवर्गः स्वर्गमार्गगमनाय बहूत्कः ॥ १० ॥
दैवाहतपूर्वभवा[धवा][२] क्रमेण संपुष्यमाणसर्वाङ्गी।
कुटिला भाति विभूषा कापि कला वैधवी स्फुरति ॥ ११ ॥

---

१. This is a strange verse where the latter half is set in a different metre than the first half. It is also likely that it is a compound verse consisting of the first half of one verse and the second half of another verse.

२. भवा could be a corrupt reading for a very likely reading धवा (धव = husband). With दैवाहतपूर्वधवा a lady is meant who was married as an immature girl but lost her husband due to ill-luck (or fate i.e. दैवम्), viz. a बालविधवा. दैवाहतपूर्वभवा would be a girl whose previous (or early) part of life (भव) was 'taken away' or spoiled by the fate. Her body is gradually attaining maturity and youth after the death of her husband. Mark the pun in वैधवी [कला] = 1. The beauty of the moon, 2. the beauty of the widow.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

तत्र वाचकगृहे जनसङ्घः पौरुषेयकलितार्धशरीरः।
स्त्रीजनेन कलितार्धतनूभृत् शाम्भवीतनुरिव प्रतिभाति।। १२ ।।

सत्कथापरिसमाप्तिविधाने यान्ति पद्ममुकुलायितहस्ताः।
तं प्रणम्य नतकन्धरदेशाः सत्वरं सदनतः स्वगृहाणि।। १३ ।।

ततः केचन–

शास्त्राध्यापनतत्पराः बुधवराः सच्छिष्य[1]वर्गान्विताः
दोलारोहपराः परे ससुहृदः सद्वैदिकाः सत्वरम्।
वेदावर्तनमाचरन्त्यथ परे बालान् वटून्, तच्छिरः–
श्रोत्रोन्नामपराः स्वरानपि तथा संग्राहयन्त्यादरात्।। १४ ।।

यत्र च–

असितमणिसुकेशाऽलंकृता पद्मरागो-
ल्लसितललितनेत्रा दन्तमुक्ता विचित्रा।
दशनवसनशोभाकारिसद्विद्रुमाढ्या
प्रतिगृहमपि दृष्टा जङ्गमा हेममूर्तिः।। १५ ।।

यन्निशान्तमणितं युवतीनां तत्तदानुकृतिकारिवचोभिः।
ह्रेपयन्त्युषसि कीरयुवत्यो यौवतं गुरुपदान्नतिशीलम्[2]।। १६ ।।

---

१. G does not make a saṃdhi butween सत् and शिष्य.

२. This whole verse is missing in the MS G and the rest of the MSS give different readings for the last group of words : गुरुपदावतिशीलम् S, गुरुपदात्वतिशीलम् K, (गुरूपदात् तु अतिशीलम् ?). The MS V originally had पदावतिशीलम् but it later corrected it into पदानति which is also the reading supplied by the MS L. However, I believe that the original reading could have only been गुरुपदे नतिशीलम् (where पदम् stands for स्थानम् or place). The young ladies bow their heads in shame when in the presence of elderly persons the female parrots start imitating their voices uttered at the time of nocturnal dalliances. (cf. *Amarukasataka*, sl. 16).

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

गेहिन्यो निजकार्यसाधनविधौ व्यग्राश्च माध्याह्निकीं
सामग्रीमुपपादयन्ति नितरां सच्छाकपाकादिकाम्।
इत्थं संगवकालमाकुलतया नीत्वा विदित्वा निजं
कृत्यं श्रीमणिकर्णिकापरिसरं सस्नुः समन्ताद् बुधाः ॥ १७ ॥

स्वर्गाद् देवगणस्तथाऽसुरगणः पातालतो भूधरात्
सम्यक् सिद्धगणस्तथा मुनिगणः सच्छ्रोत्रियाणां[१] गणः।
सत्संन्यासिगणः शिवार्चनरतः तत्पार्श्वदानां [पार्षदानां][२] गणः
मध्याह्ने मणिकर्णिकापरिसरं [सरे] सस्नुस्तरामादरात्॥ १८ ॥

तदा च परस्परमेवं वदन्ति स्म—

मणिकर्णिकापरिसरे परिसर किं वा सखे सखेदोऽसि।
सर्वस्वदानकर्ता त्रिभुवनभर्ता प्रतीक्षते जन्तून्॥ १९ ॥

भागीरथीपरिसरे निजपुरि जडजीविसंघानाम्।
स्वसरूपताप्रदानात् कथमयमद्यापि चाष्टतनुः॥ २० ॥

गङ्गातरङ्गभङ्गीसङ्गी हिमबालुकासंघः।
भवदावानलसम्भव-सम्भवतापं विनाशयति॥ २१ ॥

संतीर्णो हि भवार्णवः सुकृतिनां वृन्दैः समाकर्ण्यतां
कर्णे यान् मणिकर्णिकापरिसरे वर्णानपर्णापतिः।
अन्ते संकथयन् कथामगमयच्चास्तं समस्तां नृणां
सेयं जन्तुगणैः कथं भवभयात् सेव्या न वाराणसी॥ २२ ॥

---

१. In the MSS the two word सत् and श्रोत्रिय have been left without a संधि (सत्-श्रोत्रियाणां)

२. The reading पार्श्वद for पार्षद seems to go back to the poet himself (or the first copyist of the text).

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

कथं वृजिनमुद्धरेत् सकलजीविनां सत्वरं
क्षणादुपदिशेत् कथं परमतारकं शंकरः।
कथं कथय वल्लभा पुरहरस्य न स्यादियं
त्वदीयमणि[१] कर्णिका न मणिकर्णिका चेद् भवेत्॥ २३॥

अहो जाज्वल्यमानप्रलयानलज्वालजालजाङ्गलितजगज्जाङ्गलजनितजीवजातं जीवनजातमात्रजीवनजातं जातं कथमप्येनं कालमलंकलयति। संप्रति हि—

मध्येव्योम स्फुरति सविता तापयन्[२] सर्वलोकान्
तीव्रः कालः कलिरिव, मुदोत्तानितं भाति पद्मम्।
काशीवासी जन इव, जगच्छैत्यमस्तं जगाम
प्रौढं पापं स्मरहरपदाम्भोजभाजो यथैव॥ २४॥

छाया कृशत्वमगमत्तरुणीजनेन
सार्धं विदेशगतकान्तसमाकुलेन।
नष्टं तमः समभवन्मणिकर्णिकायां
सुस्नात्पूतजनतादुरितेन साकम्॥ २५॥

छायाऽपि कुत्रचिदहो प्रविलीयतेऽत्र
मायेव भानुगतमत्रमहो विभाति।
ब्रह्मेव भासुरतरं समुपैति तृष्णा
कृष्णार्चने सुकृतपूतजनस्य यद्वत्॥ २६॥

---

१. मनि KLSV

२. सवितापयन् L (drops one ता due to haplography)

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

मध्याह्ने मध्यभागे वियत इह कृतावन्ध्यकोपा[न्] निरुध्य
लोकप्राणप्रबाध्यज्जननिचयसदाराध्यसंभ्राजदंघ्रेः ।
वेगेनाराध्य सान्ध्यं विधिमिह दधतां नैजसान्निध्यमारान्
मन्दोहान् ध्वंसवन्ध्यं कलयति च रुचं[१] मध्यमां चण्डभानुः ॥ २७ ॥

दत्तार्घा सूक्तयन्तो दिनकरमधिकं यान्ति गेहं द्विजाग्र्याः
गेहिन्यो वैश्वदेवाद्यखिलगृहविधिव्याकुलाः संपतन्ति ।
सज्जन्ते काममेते प्रसभमतिथयः पावितुं तीर्थपादाः
गेहं गार्हस्थ्यभाजां भुजि गतमनसः संस्तुवन्तोऽन्नपूर्णाम् ॥ २८ ॥

वेणुदण्डकरकाद्यलंकृताः सद्गृहस्थजनतानिमन्त्रिताः ।
सर्वदा 'हर हरे'ति वादिनः संचरन्ति यतयोऽप्रमादिनः[२] ॥ २९ ॥

अभ्यस्तसर्वशास्त्राः वेदाध्ययनाय विरचितोद्योगाः ।
विद्यार्थिनोऽपि मधुकरवृत्त्यै भक्त्या प्रधावन्ति ॥ ३० ॥

प्रत्यहं यत्र साहस्त्रं ब्राह्मणानां सुभुञ्जते ।
लक्ष्यं लक्ष्यं[लक्षं][३] क्रमेणाशु सा काशी केन मीयते ॥ ३१ ॥

ततश्च भोजनादिकं सकलविधिमवसाय्य प्रक्षालितपाणिपादाः, नानाविधताम्बूलादिमुखशुद्धिपराः शयनगृहमाविविशुः ॥ तत्र च मुहूर्तं विश्रम्य अपराह्णसमये सत्काव्यनाटकप्रहसनाख्यायिकाचम्पूप्रबन्धबन्धादिकमध्यापयन्तः

---

१. रुषं G

२. This verse has also appeared previously as VI. 56 on p. 97.

३. In place of लक्ष्यं लक्ष्यं of undetermined meaning, I suggest लक्ष्यं लक्षं which gives the following sense : Though thousands of Brahmins are fed daily free of charge by munificent people in Kāsī, yet their target (लक्ष्यं) is to increase this number gradually (क्रमेण), but quickly (आशु), to lacs (लक्षं), so splendidly generous indeed they are!

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

विविधकलाविलासैः कालमकालयन्। क्षणं राजमार्गावलोकनाय कुतुकोत्का; नानाविधवस्तुक्रयणसमासक्ताः तत्र कामादयोऽप्यभिसरन्ति स्म। परस्परं मिलितानां*[१]—

"सहवासेन वाऽस्मासु केऽपि संबद्धसौहृदाः।
अस्मच्छीलानुसरणं कुर्वन्तः केऽपि कोविदाः॥ ३२॥

क्वचिदपि पितृनिन्दाऽऽकर्णने दत्तकर्णः
कलयति पितृनिन्दां नन्दयन् दुष्टलोकम्।
पलितललितभावे मातृमूर्धन्यकस्माद्
विसृजति सुकृपाणं निष्कृपः कोऽपि लोके[कः][२]॥ ३३॥

क्वचित् पत्या [त्न्या] पत्युर्जनकसुतयोः क्वापि जननी-
सुतानां, सौहार्दोद्दलितसहजानां क्वचिदपि।
विभागार्थं भूयः प्रभवति कलिः केवलमसौ
तदेतज्जानीत[३] क्षणविलसितं तन्मम कलेः॥ ३४॥

कदाचिन्मुदाऽस्माभिरापृच्छ्यमानः
स्वमुक्त्यर्थमर्थाकुलैर्विश्वनाथः।
तदोवाच चन्द्रार्धचूडश्चिरेण
क्षणात् स्यात् कदाचिद् विवेकोदयश्चेत्"॥ ३५॥*

इति संवासपूर्वकं निजवृत्तान्तं कथयतां सायंसमयः समगात्॥

---

१. The text piece starting from here upto śl.35 (four verses) is not found in the MS G and the same has been reconstructed on the basis of other manuscripts.

२. कोऽपि लोकः = कोऽपि जनः, someone, somebody. लोकः is preferable to लोके ('in the world') because the context refers to depravity or degradation of moral values taking place *in Varanasi* due to contact of कलि etc.

३. जानीते L

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

ततः सर्वेऽपि वदन्ति स्म— अहो महोभिर्विरहितं सहस्रकिरणोऽप्यकिरणः संवृत्तः। तिग्मरोचिरपि अतिग्मरोचिः। अहो विचित्रचरित्रं जगच्चित्राचरण - चमत्कारचर्चितविरञ्चेः यच्चरमाचलचूडाचुम्बिबिम्बखण्डो मार्तण्डोऽप्यचण्डः समजनि। पितृप्रसूप्रसूतो[१]ऽरुणिमा अरुणयति जग[२]ज्जातजातम्। तथा हि—

द्विजपतिमथ गोभिः संविधायाशु पूर्णं
चरमजलधितीरोपान्तशय्यानिविष्टः ।
असुवसुचयमौज्झद्[३] बोधयन् सर्वलोकान्
प्रविगलितकरौघः साम्प्रतं चण्डभानुः ॥ ३६ ॥

कदाचिदपि परैरहतां महतामपि श्रियं विगलयति कालः। तथा हि—

ध्वान्तध्वंसनदीक्षितः प्रविलसत् पद्मौघसम्वीक्षितः
कोकैः सादरमीक्षितः सकरुणं यः सर्वदा भिक्षितः।
ध्वान्तैः संप्रति तक्षितः प्रविगलद्भाभिर्न चालक्षितः।
सोऽप्यस्ताचलकुक्षितः परिपतन् लोकैरलं लक्षितः ॥ ३७ ॥

(पद्मबन्धोऽयम्)

अहो महोनिधिरपि महोदधौ मग्नः, पुरुषायुषजीविनां जीविनां जीवने विविधोद्योग[४] इति परमाद्भुतम्। अन्यदप्यद्भुतं पश्यत [दरीदृश्यते स्म][५]। एते किल—

---

१. प्रसूनो V
२. नगजात V
३. मौसद् KLSV (झ> स). Only G has retanied the orignal reading.
४. विविधो योग K, विधेष V (totally corrupt), विविधोधग L.
५. The MS G has the reading पश्यत whereas all others (KLSV) have an entirely different reading : दरीदृश्यते स्म, a fact which again corroborates that the MS G forms an entirely independent group by itself whereas all others belong to a separate group. This दरीदृश्यते स्म is clearly borrowed from the sentence following the verse No 38 below.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

चञ्चच्चञ्चलचञ्चरीकचलनप्रोद्भूतकम्पोद्दलत् [°द्वलत्]-
पत्रस्त्रस्तमरन्दबिन्दुमिषतः पद्मावली रोदिति।
पत्यावस्तमिते निजे, निजपतावभ्यागमोद्भावनाद्[त्]
तस्मादेव मिषादियं कुमुदिनी हर्षाश्रु संमुञ्चति॥ ३८॥

अहो महोद्योतद्योतितदशदिङ्मण्डले त्रयीमयमण्डलेऽ[१]स्तसमयमनुवर्तमाने वर्तमानेषु जगति वस्तुषु किं किं नाद्भुतं दरीदृश्यते स्म। तथा हि—

सन्ध्या दर्शयतेऽनुरागमधिकं कामं द्विजानां गणः
संप्राप्याशु निवर्तते किमु नभः ताराश्रुभी रोदिति।
कोकाः शोकसमाकुलाः कमलिनी मालिन्यभावं गता
वह्नावाविविशुस्त्विषः सवितरि प्राप्तेऽस्तपृथ्वीधरम्॥ ३९॥

अन्यच्च। मलिनानां प्रसरणावसरः संजातः, अन्धतमसोलूकखलाखुसर्पचोरकुलटारिवंग[-वर्ग]प्रभृतीनाम्। अन्यच्च अयुक्ततरम्—

पुष्करमगाधमाप्तौ तरणीसंचालितौ करौघेण।
प्राप्तावपि परपारं तीरे संमज्जतुर्न तद् युक्तम्॥ ४०॥

अहो सहसा महसां निधिरपि कालाजगरेण निगीर्णः। कज्जलार्णवप्रवाह इव प्रसृततमः तमःस्तोमः। दैवादुद्भूतदशा इव दशादीपा अपि[२] स्वानुरूपतमं तमःसंघातं[३] घातयितुमुद्यताः समभवन्। तदाहमेवं मन्ये—

---

१. The expression त्रयीमयमण्डले is found only in MS G and is mising in all others.

२. An editorial reconstruction. All MSS uniformly read दैवादुद्भूतदशादीपा इत

३. तमः संघातयितुं G (one घातं dropped due to *haplography*).

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

चरमाचलशिखराग्रान्निपतन् संचूर्णितः सहस्रांशुः ।
तद्गात्रसूक्ष्मखण्डा दीपव्याजेन राजन्ते ॥ ४१ ॥

अहो महतामपि अनुचितारम्भ[१] संभावनयाऽनया अपगमापायभाजां भाजालरहिततारतम्यता भवत्येव। यतश्च—

वेदत्रय्याकलितः कमलभवाद्यादिदैवतैर्वन्द्यः ।
पतति प्रसंगवशतो वारुण्या भानुमान्, कथं नान्यः ॥ ४२ ॥

ततश्च निजं साध्यं विधिं समाप्य, बहुतराभ्यासतत्पराः तदर्थविचारणासमर्था विद्यार्थिसार्था मुहूर्तमात्रं शास्त्रमाकुलयामासुः[२] । काशीं स्तुवन्तोऽप्यूचुः—

अनेकप्रासादोपरि गृहसमाबद्धविलसत्
पताकासंयुक्तो दिवि लसति दीपावलिगणः ।
तमःस्तोमप्रध्वंसनविधिनिबद्धादरभराद्
भवत्सेवां देवा दधति किमु सद्रत्ननिचयैः ॥ ४३ ॥

यदीयप्रासादस्थितशिशुजनोन्मुक्तसुगुणाः
गता वातोज्जीवाः प्रकृतिमुखराः स्वः[३] प्रतिदिवम् [दिनम्][३] ।
समाख्यातुं काशीपुरवरनिवासी जनगणः
समायातीवाशु स्फटिकगिरिवप्रं सुविपुलम् ॥ ४४ ॥

---

१. अद्भुवितारंभ KV

२. Folio 29b of the MS G ends here. The next folio (30 ab) is entirely missing in this MS. Hence the text upto the verse 56 + the following paragraph in prose (p.122) has been resnstructed only on the basis of the rest of the (less reliable) MSS.

३. सं L स्यं (मुखरास्यं) KV. If we presume प्रकृतिमुखरास्याः as correct reading, प्रतिदिवम् (towards heaven) would suit the context. वातोज्जीवाः = kites.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

शरद्घन[1] घनावलीतुलितकान्तिहर्म्यावली-
समुच्छलनलालितो जयति वैजयन्तीगणः ।
परिश्रमपरिभ्रमद्रविरथोद्वहद्वाजिनां
भ्रमच्छ्रम[2] निवारणं किमु करोति संवीजनैः ॥ ४५ ॥

यदुपरिवलभीषून्मुक्तसंयन्त्रधारा
जलभरपरिसारा भानुमत्सप्तसप्तीन् ।
जवगमनपिपासून् तोषयत्याशु नूनं
श्रमजनितसुखेन [मुखेन ?] व्याकुलास्यो [°स्यान्] क्षणेन ॥ ४६ ॥

शशभृदुपलबद्धाः कुट्टिमागारभूमीः
शशिकरपरिरम्भस्यन्दिनीः संविलोक्य ।
तरलतरतरङ्गैर्गङ्गया प्लाव्यमानं
पुरमिति जनसंघैर्व्याकुलं संव्यतर्कि ॥ ४७ ॥

उपरिगृहगतानां विघ्नराजव्रतानां,
बुधवरवनितानां वारिदूर्वाक्षतौघैः ।
तपसि[3] शितिचतुर्थ्यामर्घ्यदानेन पुष्टस्
तरलहरिणशावः कष्टमिन्दोस्तनोति ॥ ४८ ॥

यदुपरिगृहभाजां भूरिगोपानसीनां
जनितपरपताकाचीनचीनांशुकेन[4] ।
सततगमनवेगाज्जातसत्स्वेदबिन्दून्
रविरथतुरगाणां[5] प्रोञ्छतीवेति शङ्के ॥ ४९ ॥

---

१. शरद्घन KV
२. The saṃdhi has been done by the Editor. The MSS read भ्रमत्श्रम.
३. नभसि K. तपस् (= the month of Māgha) is preferable because in this part of India the गणेशचतुर्थी is celebrated in माघ and not in श्रावण.
४. चीनांमुकेन K चीनांभुकेन V (श > स > म > भ)
५. तुणां (drop रगा) KS

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

पञ्चाननोत्सङ्गगतो[1]ऽपि नित्यं यस्मिन् सुखं जीवति जीवसंघः।
मूलं विना देहमहीरुहोऽयं यस्मिंस्तदानन्दवनं चकास्ति ॥ ५० ॥

संमुक्तिवल्लीकलितं समन्तात् सद्वंशजाताश्रितसर्वदेशम्।
फलं प्रयच्छन् शिवकल्पवृक्षो यस्मिंस्तदानन्दवनं चकास्ति ॥ ५१ ॥

आनन्दकाननमिदं श्रुतिभिश्चानन्दकाननैः कथितम्।
यद्भवजनतापङ्कं भवजनितापङ्कमपनयति ॥ ५२ ॥

किं वा बहुभिरुपायैरद्वयमाप्तुं द्वयं कुरुत।
भजत भवं भवनाशनमविमुक्तं मुक्तये श्रयत ॥ ५३ ॥

मलिनान्तःकरणत्वात् पुरुषाणां ज्ञानयोगयोरसिद्धत्वात्।
यदि न भवेदविमुक्तं स्यात् संज्ञाशब्द एव मुक्तिपदम् ॥ ५४ ॥

यस्यां च—

निजकान्तालंकृतः कान्तालंकृतः[2] कान्ताजनः कामाभिरामरतिरिव, रतिश्च कान्ताजन इव। नानाविधार्थशालिनोऽपि धनिनः कवय इव, कवयश्च धनिन इव। नानालङ्कारशालिनो बुधा विबुधा इव, विबुधाश्च बुधा इव। गङ्गातीरवासिनो हंसाः परमहंसा इव, परमहंसा हंसा इव। विश्वेश्वरार्चनतत्परा देवा मानवा इव, मानवा देवा इव विलसन्ति।

मुरारिगिरिसंभूता पुरारिजलधिं गता।
गङ्गेव भाति काशीयं काशी गङ्गेव भासते ॥ ५५ ॥

---

१. नतोऽपि L मतोऽपि K
२. KS and V drop the second कान्तालंकृतः (beautifully adorned/made up/ornamented) which has been retained by the MS L only.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

यत्र च गङ्गा परमसुषमाभारमुद्वहति गङ्गेव, हरसंगात् सुखमनुभवन्ती गौरी गौरीव। यत्र राजापि तत[त्त]नुः विश्वेश्वरो विश्वेश्वर इव। यत्र च सौन्दर्यादयो गुणाः गुणा इव विलसन्ति।

पतितजडजनानामद्वयानन्ददात्री
भवभवभयदुःखध्वान्तविध्वंसकर्त्री ।
इह जगति शरण्या काऽस्ति धन्या वदान्या
मम हृदयविचारादस्ति काशीव काशी ॥ ५६ ॥

यत्र कान्ताजनस्य वदनानुकारी तुषारकिरणः, तद्गमनानुकारिणो हंसाः, तल्लास्यानुभाविनः शिखिनः, तत्कोमलवचनरचनाकलरवाः कलकण्ठाः, तत्सौन्दर्यानुकारिणी रतिः, तन्नायकप्रेमानुसारिणाश्चक्रवाकाः, तद्गतपटुवचनानुकारी सुरगुरुः, तद्गतकविवचनानुसरणचतुरश्च काव्यः इत्थं प्रतीपमुल्लसति[१] ।

सदानन्दप्रदत्वाच्च सदाशिवनिवासतः ।
वाराणसि भवत्तुल्यमस्ति ब्रह्मैव केवलम् ॥ ५७ ॥

विगलदमृतबिन्दूद्भासिगङ्गामरन्दं
हरपरिचरभृङ्गं गौरगौरीवराटम् ।
नहि विलसति काशी किन्तु संसारसारं
कनकमणिविचित्रं पुष्करं भाति भूमौ ॥ ५८ ॥

सुन्दरेण चरणाम्बुजन्मना कोमलेन करपल्लवेन च ।
सुप्रसन्नवदनेन्दुना जगत्-पापतापभयनाशि काशिका ॥ ५९ ॥

---

१. The MS G is defective upto this point (cf. note 2 on p. 119) and resumes the text with the letters °सति on Folio 31 a.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

विलसदमृतवल्लीमूलकन्दं किमेतत्
किमु शतपथशाखालम्बि सत्पुष्पजालम्।
किमु जनसुकृतानां पूर्वजन्मार्जितानां
परिणतफलमेतच्चाविमुक्तं विभाति॥ ६० ॥

हरिभवनगतानां पूर्वपुण्यान्वितानां-
मगणितगुणजालालम्बिवैकुण्ठ[१]लोकः।
सनसनकसुशोभ[:] स्मारयत्याशु नूनं,
भुवि हरिहरभक्तं चाविमुक्तं क्षणेन॥ ६१ ॥

विषम[२]विषयमूर्च्छाच्छादितो जीवलोकः,
सुतगृहबहुवित्तालाभभावात् सशोकः।
अतिपरिचयदोषा[३]दन्यसामान्यवेशां,
परिकलयति चित्ते काशिकामाश्रयेण॥ ६२ ॥

विद्यावासपुरीति सर्वविबुधैर्वेदाधिवासस्थली
वेदाभ्यासपरैर्धनार्चनपरैर्लक्ष्मीविलासास्पदम्।
कामोल्लासवनीति कामिनिवहैर्मोक्षार्थिभिर्मोक्षभू-
रालोकि क्षितिमण्डले हरपुरी पूर्वोत्थपुण्यैरियम्॥ ६३ ॥

---

१. नैकुण्ठ KV
२. विशम G
३. दोशा G

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

भित्त्वा भूमितलानि सप्त सहसा प्रौढप्रभाभासुरो
मन्ये शेषसमस्तमस्तकमणिप्रोद्यन्मयूखव्रजः ।
नानारत्नसमूहभूषितमहासौधावलीविश्रुतां
काशीकामपि काशिकेति पदवीं[१] यातः किमप्यद्भुताम् ।। ६४ ।।

बलिरपि परिणद्धो येन मायागुणेन
स्वयमपि परिणद्धस्तद्गुणैर्भावशुद्धैः ।
निजपतिमभिसर्तुं तं नु काशीच्छलेन
क्षितितलमवतीर्णः कोऽपि वैकुण्ठलोकः ।। ६५ ।।

शक्त्या भूमिपतिः, शिवार्चनविधिर्भक्त्याऽनुरक्त्या स्त्रियः
संसक्त्या निगमेषु भूसुरकुलं, नित्यं विरक्त्या यतिः ।
शुक्त्या वारिधिवीचिभूपरिसरः, साधुः सदुक्त्या परा–
मुत्कर्षा श्रिय [मुत्कर्षश्रिय] मादधाति भुवने, मुक्त्या च वाराणसी ।। ६६ ।।

पतितजडजनानां सेवनं[ने ?] काशिकायाः
यदधिगतमद[ह][२] स्तज्ज्ञानशास्त्रावलोकः ।
निखिलनिगमपाठाभ्यासयोगः स योगः
परिगलितसमाधिः सस्समाधि[३]श्चकास्ति ।। ६७ ।।

---

१. पदविं V (a later correction/ corruption from the original पदवी), G, L.

२. प्रदः K, महः n. ( = तेजः, splendour) is my conjecture which has all the likelihood of being correct in view of the following pronoun तत् (since महः is a neuter too) and its synonym आलोकः ।

३. The saṃdhi in सस्समाधिः is rather unusual. (Contrast with Pāṇini VI.1.132).

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

यदपि विमलतीर्थव्रातजातश्चकास्ति
क्षितिवलयविभूषाकारिका काशिकैव।
ग्रहभगणनिशेषा[श-][1]प्रौढभाभासुराङ्गा
नभसि[2] तदपि लोकालोकहेतुर्दिनेशः॥ ६८॥

यत्सौधशृङ्गवलभीगृहसंस्थितस्य,
कान्ताजनस्य मुखकान्तिनिरीक्षणाय।
चन्द्रश्चसन् [चरन्] मुकुरति क्षणदासु नित्यं,
तिर्यक्चरोऽपि चरमाचलचूडचुम्बी ॥ ६९॥

यदुच्चकुड्येषु विघट्टिताङ्गनिष्यन्दि पर्वक्षणदासु यत्र।
तत्र स्थिताधौतगुडभ्रमेण पिपीलिका चुम्बति चन्द्रबिम्बम्॥ ७०॥[3]

सुरसरिदमृतौघप्लावनात्[4] शुद्धवर्णा,
शिवशशिकरसङ्गोन्मुक्तपीयूषपूर्णा।
कलिकलुषकलाभिर्व्याकुलानां जनानां,
सकलदुरितवह्नेर्नाशिका काशिकैव॥ ७१॥

---

१. निषेषा LV, निषेधा KS, निशेशा G. There is hardly any doubt that the correct reading is निशेश ( = moon) compounded to प्रौढ।

२. The grammatical position of नभसि (Locative sing. of नभस् n.) is very problematic. Does the author use this word in Fem. gender assuming that the word नभस् has also a fem. form नभसि/नभसी as सरस् has सरसी ?

३. This verse is missing in the MS G and seems to have been incorporated in the Z group of MSS. It seems to be an independent समस्यापूर्ति - verse since the fourth pāda of this śloka is even today a favourite *samasyā* with the poets of Vārāṇasī):

४. स्नावनात् KS, also V which has later corrected it into प्लावनात्

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

जननमरणदुःख[१] ध्वान्तविध्वस्तचक्षुः-
परिगतभवभाजां व्याकुलानां जनानाम्।
भयतमसि गतानां पीडितानां समन्ताद्
भवभुजगकराले[ला] काशिका काशिकेयम्।। ७२ ।।

परिकलय पयोधे[धौ] सन्ति नानापदार्थास्
त्वयि निजगतरूपाख्यापने येऽसमर्थाः।[२]
प्रथयति तव कीर्तिं तीरभूमौ निषक्ता
ललितविमलमुक्तासङ्गिनी शुक्तिकाद्या।। ७३ ।।[३]

सर्वस्वहारिणी त्वं चरतां संसारकानने घोरे।
अनुभव तत्फलमुच्चैरीश्वरशूलाधिरोहणं काशि।। ७४ ।।

---

१. All MSS here read दुरख for दुःख. It seems that the author spellt the word as दुख्ख and out of ख later a र originated.

२. The MS S completely drops this second pāda (त्वयि—— समर्थाः)

३. The MS V has a beautiful additional verse on the glory of Kāśī written on the margin of Fol. 89 A
काशी विलसति भूतले कैलासादधिकैव।
विधिहरिहरपरिसेविता भवभवतापहरैव।
भवभवतापहरैव यत्र विलसति सुरगंगा।
शंकरसुन्दरमौलिसारभूषण-जलसंगा।
शंकरसुन्दरमौलिसारभूषणजलराशिः।
स्नानात् सुजनो यत्र भूरि विलसति रविकाशी।।
(composed in the Kuṇḍaliyā metre of Hindi)

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

साधुपुण्यनिचयैकराशिका ज्ञानपङ्कजवनीविकाशिका।
सर्वतो जयति दुःख[१]नाशिका काशिका त्रिभुवनप्रकाशिका ॥ ७५ ॥

जीविजन्तुनिवहैकतारिका सज्जनाम्बुजवने विहारिका।
गाढमोहतमसैक[२]नाशिका काशिका त्रिभुवनप्रकाशिका ॥ ७६ ॥

जीवजन्तुजनमुक्तिकारिका मुक्तिपञ्जर[३]चरैकसारिका।
यां स्तवीति हिमशैलदारिका काशिका त्रिभुवनप्रकाशिका ॥ ७७ ॥

चन्द्रशेखररतिप्रदायिका मुक्तिमार्गरचनाविधायिका।
भक्तवृन्दभवभीतिनाशिका काशिका त्रिभुवनप्रकाशिका ॥ ७८ ॥

विषयाशीर्विषसंभवविषमविषव्याकुलो लोकः।
गङ्गे त्वद्विषपानान्निर्विषतां याति यच्चित्रम् ॥ ७९ ॥

गङ्गे त्वद्विषपानाद्विषयविषव्याकुलो लोकः।
निर्विषतां गच्छति यद् 'विषस्य विषमौषधं' सत्यम् ॥ ८० ॥

महिमा हिमाचलभवे भवे प्रसिद्धोऽस्ति, किं कथये।
त्वद्विषपानात् शूली पाण्डुरुगेवाशु जायते लोकः ॥ ८१ ॥

---

१. All the MSS here read दुरख for दुःख, cf. the footnote no. 1 on page 126.

२. In Place of तमस् (n.) the author uses here the word तमस and joins if with एक to form तमसैक. There does not appear to be any word like तमस in classical Sanskrit.

३. पङ्कज KSV

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

पातकं हरतु देवधुनी ते या सुहृज्जनमनांसि धुनीते।
भूषणीयति सदा शिवपुर्या बिभ्रती विधिहरीष[1] [श] वपुर्या ॥ ८२ ॥

यश्च जह्नुतनयातटभूमावुज्झति[2] स्म तनुमाशु विभूमा।
लभ्यते स्म खलु तेन तनूनां शंभुसंगमवशादतनूना [ता ?] ॥ ८३ ॥

हरेः पादाम्भोजे तदनु विधिभृङ्गारकगृहे
जटाजूटे शंभोस्तदनु हिमकूटेष्वधिगतम्।
ततो भूमीलोके वृजिनभयशोकेन कलिते
मदङ्गे तद् गंगे तव विमलवारि प्रसरतात् ॥ ८४ ॥

गलद्गरलभक्षणं ज्वलितवीतिहोत्रेक्षणं
फणीफणसहस्रकै[कं] प्रकुरुते विषाभ्युक्षणम्।
सहेत विषमेक्षणस्त्रितयतापदुःखं कथं
यदाशु भवती भवेन्न भवती-त्रितापा[3] पहा ॥ ८५ ॥

खड्गी नन्दकखड्गी वत्सः श्रीवत्सलाञ्छनो भवति।
अधिगङ्गमुज्झितवपुश्चक्रीवान् जायते चक्री ॥ ८६ ॥[4]

तव तरलतरङ्गैर्बिम्बितो भानुमान-
प्यनुभवति बहुत्वं तत्र नो चित्रमस्ति।
जलशिथिलितपङ्कैरङ्कसंस्थः करङ्कः
कथमपि गतकष्टो ह्यष्टधा भावमेति ॥ ८७ ॥

---

१. हरीप V (ष > प)
२. बुझझति G वुझति LKSV
३. भव-तीव्र-तापा GLV (a *lectio simplicior* !)
४. This verse (No 86) is totally missing in the MS G.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

सदा पङ्काशङ्काकुलिततनुरङ्काधिपतिर-
प्यपङ्कस्ते पङ्कात् प्रभवति करङ्कापि[पिं] तवपुः।
तदा संभासं भावितननुमसम्भावनपरं
परीरम्भाद् रम्भा परिचरति जम्भारिसदने॥ ८८॥

महोदारा तारापरिवृढतुषाराभविसरा
स्थिरा वाराणस्यां स्मरहरसमाराधनपरा।
दिशां हाराकारा विमलतरनारायणपदात्
पतन्ती त्वद्धारा मम जनन[१]मारात् शमयतात्[२]॥ ८९॥[३]

१. कलुष V

२. शमयतु V

३. After this and before the next verse the MSS K and L insert the following गंगा स्तुति—
मुक्तावलिललितं, चिद्रसगलितं, मुनिजनवलितं भयहरणम्।
मकराधिपवाहं, सागरदाहं, हरति सदाहंकृतिधरणम्।
भवभवभयजालं, किरतु करालं, तव कीलालं, सुखवरणम्।
गंगे तव चरणं, मम हृदि शरणं, विलसतु करणं भवतरणम्॥
काशीपुरवासे, शशिसमभासे, हरमपि दासे पापक्षरम्।
सगरात्मजवासे, गलितायासे रचिता...... ते विधृत..... ।
तुहिनावलिरंगे, विरचितभंगे, प्रविलसदंगे शशिसंगे।
जय जय जय गंगे, तरलतरंगे, भवभयभंगे भवसंगे॥
The *stuti* which is a certain interpolation, seems to have been inspired and composed on the lines of similar *stutis* found in the *Rāmacaritamanāsa* of Tulasīdāsa (cf. भए प्रकट कृपाला, दीनदयाला, कौसल्याहितकारी etc. बालकाण्ड) and elsewher. Only the MS L has handed it down in a somewhat readable form. The version found in K is hopelessly corrupt, hence this difficulty in reconstructing the original.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

विशेषविषयावलीविषमसेवनाविर्भवत्-
प्रभूततरपातकावलिविलीनचित्तश्चिरम् ।
भवत्तटकुटीगतप्रकटवासविश्वासतो,
नयामि दिवसानहं समुचितं कुरुष्वाम्ब यत् ॥ ९० ॥

अविमुक्ते ददातीह जन्तूनामभवं भवः।
को विश्वसेज्जह्नुसुते भवती प्रतिभूर्न चेत् ॥ ९१ ॥

अथ कथमिह काशीलोभतो लीयमानां,
स्थिरतरवररूपां कोऽप्यकूपारपत्नीम् ।
कविवर इह कश्चिन्निश्चयोद्भ्रान्तचित्तः,
समवददथ गङ्गां सिन्धुसंगाय भूयः ॥ ९२ ॥

सकलनदनदीनां नायकस्त्वत्प्रतीक्षा-
बहुविलसदनूपः सोत्करूपः किलास्ते।
यमसदनगतानां पाहि सन्तापभाजां
सगरसुतशतानां तापनिर्वापणेन ॥ ९३ ॥

इति विविधविबुधजनोद्गीर्णवर्णौघमनुकर्णयन्ती सुरस्रवन्ती सत्वरतर-मानसचरपयोधिमनोरथपरिपूरणायेव विरचितकामोपभोगसुललितवेशा, भानुजा-तरङ्गविरचितकेशा, सीमन्तसिन्दूरायितवाग्विशेषा, विरचितशोणाधरदला,

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

शरयूप्रवाहप्रावारपा[प]रीवृताननना,[१] नानापत्रावली[२]कलितगण्डकीकल्पितकपोला, पुनः पुनः प्रेर्यमाणा, विलसद्धंसका, उच्चामरैश्चामरैर्वीज्यमाना,[३] नानाविध-रत्ननिचयालङ्कारखचितं[ता] तन्मनोरथपरिपूरणाय विलसन्नानाविधावर्ता सागर-कृतभूवर्तान् [-गर्तान्][४] आप्लावयामास। ततः—

कपिलमुनिसुकोपप्रौढदावानलोद्यल्-
ललिततरशिखाभिः प्लुष्टसर्वाङ्गसाराः।
भसितलसितदेहाः सागरा वल्गु गङ्गा-
चरणशरणचित्ता मुक्तिभावं गतास्ते॥ ९४॥

॥इति श्रीमत्समस्तशास्त्रपारङ्गमदीक्षितढुण्ढिराजात्मज-साहित्यपारावार पारीणकविताकान्तारकण्ठीरव-सर्वस्वदानदीक्षाविचक्षणश्रीमद्दीक्षित बालकृष्णसूनु-शङ्करविरचिते गंगावतरणचम्पूप्रबन्धे गङ्गाचरणाङ्कः सप्तमः उच्छ्वासः॥

□□□

१. The MS G drops नना (due to *haplography* induced by the following नाना)
२. पत्रावल्ली **KLSV**, पत्रावलीवल्ली **G**
३. बीज्यमानं **G**
४. गर्तान् is an editorial conjecture which has all likelihood of being correct since वर्तान् does not give here the desired sense.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## ग्रन्थोपसंहारः

ऋतुब्रह्मब्रह्माननहरणदेहावनिमिते,
सहोमासे[१] सोमाहनि विशदपक्षे शिवतिथौ।
लसत्काशीशम्भुस्तवननिभृता शंकरकृता,
गता गङ्गाचम्पूर्विमलतरसंपूर्णपदवीम्॥ १॥

गंगा-गंगाधरपुरं गंगाधरपदाम्बुजम्।
वर्वर्ति मानसे येषां तदर्थमयमुद्यमः॥ २॥[२]

या देवालयजा तथोपवनजा वापीतडागादिजा
कीर्तिः सद्गुणजा च किं चिरमहो भूषायते भूतले?
किञ्चैषा-[किन्त्वेषा]ऽप्रतिमप्रबन्धरचनावैदग्ध्यमुग्धाक्षरा-
संबद्धा कविभिः पुरातनकथेवाकल्पमाकर्ण्यते॥ ३॥

सकलगुणभृतायाः स्वर्धुनीसंश्रितायाः
भुवि मम कवितायाः नव्यता नैव दोषः।
त्रिभुवनजनवन्द्या सर्वथैवाभिनन्द्या
स्मरहरणशिरःस्था चन्द्रलेखा नवैव॥ ४॥[३]

भुवि मम वाङ्मयबन्धः कुर्वन् सुधियां सुखं जयतु।
गुणखण्डननिपुणानां धियः खलानां सुखं जयतु॥ ५॥[४]

॥ शुभं भवतु॥

□□□

१. सहोन्मासे G.
२. This verse in missing in the MS G
३. This śloka is found only in the MSS K and is missing in all the other three, viz. GLV.
४. This last verse is conspicuous by its absence in the MSS G and L.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# श्लोकानुक्रमणिका



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

# परिशिष्टम्

Excerpts from the MS No. 24792 of the Vidyāpītha
containing the writings of शंकर दीक्षित

[I]

*[चेतसिंहराज्याभिषेकवर्णनपरस्य कस्यचिदज्ञातनाम्नो नाटकस्य प्रस्तावनाभागः]*

*

यदार्याणां कार्येष्वभिमततमां सिद्धिमवहद्
यदार्द्रं कारुण्यादिव मदजलान्मानितनिजम्।
हठात् प्रत्यूहालिं दलयदलिमालामिव महः
समन्तात्तद् दन्तावलवदनमन्तर्विलसतु॥ १॥

भालस्थानलसत्सुधाकरसुधापानप्रसंगोल्लसन्
मोदप्रोज्झितदानपानरचनाकेलिं मिलिन्दावलीम् ।
सिन्दूरारुणकुण्डलीकृतवलत्-शुण्डाग्रभागोत्पतत्-
फूत्कारैस्तिरयन् विनाशयतु वो विघ्नान् स विघ्नाधिपः॥ २॥

*Additional Ślokas on the lower and upper margins (3, 4, 5, 6)–

करालं कंसादेः कुलकुवलयोन्मीलनकरं
कदम्बाग्रात् कूर्दत् कवलितवलत्कालियकुलम्।
कथंचिन्मच्चित्तं कलयतु महो गोकुलकुले
कुलस्त्रीणां केलीविकलितमनः कामुकतरम्॥ ३॥

विलसति सितरूपा स्वर्धुनी मूर्ध्नि यस्मिन्
सितमपि च हिमांशोर्मण्डनं खण्डमस्ति।
निदधति हृदि नित्यं योगिनां शुद्धकायं
प्रमुदितमधिसायंकालमन्त [र्म ?] होऽस्तु॥ ४॥

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

इदं च भवनाटकं सृजति सर्वदा मायया
सहैव समवस्तुभिः सपदि चित्रपात्राकुलम्।
यदीश्वरसुनायकोल्लसितभूमिकाभासुरं
सुरञ्जितसुहृज्जनं जनमुदेऽस्तु तद्वै महः ॥ ५ ॥

नान्द्यन्ते सूत्रधारः—

अलमतिविस्तरेण। (विचिन्त्य) अहो त्रिभुवनमणिमुकुटहीरायमानहरमूर्तिः, सकलजगदुद्धारकारण [भूता][१] निखिलाघततिनिवारण-वारणमुखभवभयहरण-शरणागतशरणकारण-संसारतरणिसरणितारण-दारुणदुरितविदारण-सुरतरंगिणीतरलतरंगविभूषिता वाराणसी नाम पुरी/नगरी।[२] तस्यां खलु श्रीसाम्बसदाशिवप्रसादाविर्भूताद्भुतविक्रमैकनिलयः सकलचातुर्यधैर्यादिगुणानां निवसतिः श्री बलिवंड(द्य) सिंहो नाम राजाऽभूत्। यश्च सकलोर्वीपतिगर्वसर्वस्वसर्वंकषस्वभावसंभावितानेकपुरुषार्थसार्थकीकृतार्थिसार्थनिरर्थकीकृतपार्थकर्ण-शिविनलनहुषययातिमान्धातृचरितः—

यस्य प्रौढ़प्रतापोर्जितगतिविजितस्तेजसां राशिदर्क-
स्ताम्य[मज्ज][२]त्यन्तःसमुद्रं भ्रमति च परितो दिङ्विमूढः (sic) समन्तात्।
यत्कीर्तिस्तोमसोमस्त्रिभुवनमखिलं पूरयन् स्वप्रभाभि-
स्त्रासात् संक्षीयमाणं विधुमपि धिनुते स्वप्रकाशार्पणेन॥ ६ ॥

तस्य च तनूजः—

अस्ति क्ष्मापालमौलिस्थलमुकुटलसद्रत्नरश्मिप्रकाश-
ज्योत्स्नापानप्रकामोल्लसदलसचलत्खड्गधाराचकोरीम्।
नाना वैरिप्रतापज्वलदनलकणप्राशनोन्मीलिताक्षीं
नित्यं तन्वंगि[प्रीत्या वि-]तन्वन्[२] जयति जनसुहृच्चेतसिंहः क्षितीन्द्रः ॥ ७ ॥

---

१. The reading भूता was later substituted by the subsequent long drawn compound extending up to वाराणसी नाम.

२. These are alternative readings suggested by the scribe (or the auther) either over the line or on the margin (पुरी/नगरी, ताम्यति/मज्जति, तन्वङ्गि तन्वन्/प्रीत्या वितन्वन्).

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

शत्रुध्वान्तनिवारणैकतरणिस्त्रैलोक्यचिन्तामणि-
धर्माराधननित्यबद्धसरणिः प्रोद्यद्यशोधोरणिः ।
भूमीभूषणभूतभूमिपशिरोभूषामणिः शोभते
स श्रीमानिह चेतसिंहनृमणिस्तेजो विशेषारणिः ॥ ८ ॥

यत्तेजः सविताविता भुवि सुविख्यातः कियानंशुमान्
इत्येकः प्रतिमासमाससविधिः कुर्वन्नपूर्वं रविम् ।
बुद्धं बुद्धिमतानतावदपि यद्धात्रातिमात्राखिल-
प्रत्यर्थिप्रलयेन येन सकलानेषः पुनर्जेष्यति ॥ ९ ॥

यद्दानच्युतवारिपूरितपयःपायोधिनाथोदित-
श्रीमद्धामयशः प्रकामशशिनः प्रोद्दामवामश्रिया ।
दृष्ट्वापत्यमसत्कृतं विधुमयः कुर्वन्निवार्तस्वरान्
अम्भोधिर्बडवानलच्छलतया साधिः समुज्जृम्भते ॥ १० ॥

यद्दानद्रविणादरप्रतिसरप्रागल्भ्यलब्धाधिक-
भ्रान्तिः [ग्लानिः] को न सदोनतां श्रयति यद्देवस्तदेवं शृणु ।
सन्तानस्तरुतामुतापि जलजत्वं श्रीः सचिन्तामणि-
ग्रावत्वं सुरगौः पशुत्वमचलत्वं रोहणः शोभनः ॥ ११ ॥

तस्य प्रतिनृपतिमनोरथार्णवनिवारणवेलायां पौरस्त्यदाक्षिणात्य-पाश्चात्यौत्तरदेशजातपालननैपुण्याधिगताधिकतरकीर्तयः स्वस्वदेशोद्भवविशिष्टवस्तुरत्नोपायनपाणयः नृपमणयः संघीभूय आगताः । तैश्च भूसुरकुलकलितैरभिषिक्तः सदसि नानागणितमणिगणघटितसिंहासने तैः परिवृतः ग्रहैः सहस्रांशुरिव समुपविश्य समाजवाजिवस्त्राभरणैः सर्व एव सभाजिताः । ततश्च विप्रवनीपकनटभटगणिकागायकनग्नकादिष्वर्थिसार्थेषु कनकवस्त्रावरणविविधभाण्डस्थापकादिकलितललितसिन्धुवाह्लीक-आरट्टवनायुजवाजिजातं यथाभिलषितं कल्पतरुरिव समकल्पयत् ।

ततश्च 'श्रीमदवसानसिंघ मौलिमन्त्रिवर्य श्रीमद्भाईरामकलितः'[३] मामाहूयाज्ञप्तवान्—

३. It looks like that this portion has been sought to be deleted later since the letters श्रीमद and कलितः are marked with three horizontal lines across the letters.

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

रे सूत्रधार मुकुटस्फुटमत्र किञ्चित्
त्वं नाटकं रचय शान्तरसप्रधानम्।
गंगा-गिरीश-गरुडध्वजचित्रवेशं
ब्रह्मानुभूतिकलितं कलितं तु नाशि ॥ १२ ॥

तद् गृहिणीमाहूय पृच्छामि।

*(नेपथ्याभिमुखमवलोक्य)*

गेहिनि इतस्तावत्।

*(प्रविश्य)*

**नटी**—एसम्हि गेहिनी। किंणु क्खु अपूब्बं कज्जं जेण मज्झण्ण संझा सामग्गी संवादणबावडाये मए णत्थि बालअस्स थणं वि दादुं ओआसो। तुमं उण पुणो पुणो हक्कारेसि।

**सूत्रधारः**—प्रिये न श्रुतस्त्वयाद्यतनवृत्तान्तः ? अपि च मध्याह्नसंध्यासामग्रीव्यग्रा ग्रामीणवृत्तयः, वयं पुनर्महीपाललीलानुग्रहवृत्तयः।

**नदी**—ता कहेदु अज्जो वुत्तन्तम्।

**सूत्रधारः**—(सर्वमप्युदन्तं कथितवान्)

**नटी**—कोसो अवसानसिंह का(को)सो मौलिमन्त्रिवरो भाईरामः ?

**सूत्रधारः**—प्रिये न श्रुतस्त्वया त्रिभुवनविख्यातोऽवसानसिंहः मौलमन्त्रिवर्यः भाईरामश्च। यश्च—

आशैशवात् समभिसेव्य च चेतसिंहं
नानोपचारचरणैः करणैः सुखानाम्।
तद्राज्यलाभहितसंहितचित्तवृत्तिः
तत्कल्प एव समभूदवसानसिंहः ॥ १३ ॥

श्रीमद्दक्षिणदाक्षिणात्यकुलभूभूमीसुराणां वरः
कारंजाख्यपुरे पुरा समभवद् यत्पूर्वजानां स्थितिः।
तन्नाम्ना विदितो हितोपकृतिमान् चातुर्यचिन्तामणि-
र्भाईराम इति प्रकाममुदितो मन्त्राब्धिपारंगमः ॥ १४ ॥

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

श्रीकीर्तिवर्मनृपतिं गोपाल इव बुद्धिमान्।
श्री चेतसिंहनृपतिं प्राज्यं राज्यमकारयत्॥ १५ ॥

पुनरपि स एवमुक्तवान् यदयं किमप्यपूर्वरूपकप्रेक्षणकुतूहली राजसमाजः। तत्केनाप्यभिरूपरूपकेण विनोदयितव्यः यथान्यनाटकादिषु विरागः स्यात्, यतः—

शब्देषूद्भटता तथा कठिनता चार्थेषु तत्तद्रस-
प्रोत्कर्षस्फुटता घटेत यदि तैर्भावानुभावादिभिः।
संगीतोज्ज्वलता तथा मधुरता कंठेऽप्यलंकारिता-
लंकारेषु तदेव हाटकमिव स्यान्नाटकं नाटकम्॥ १६ ॥

नटी—अहो गुरुओ क्खु एसो अपेक्खिद बहुसंभारो भारो तु मंडण अणुदिणं गुणबुज्झअं जणं एव्व खोजन्तो मज्झंणो सह दुल्लहदा वड्ढिदोत्तमर्णसंपदो संपदं जेव्व उआसीणो णडसमाजो कथं राजसहं [हां] अणुरंजिस्सदि अज्जो ?

अथवा—

णो जेण पेक्खदि गुणं गुणिनो महीसो
णो तेण संफुरदि धीफुरधीहतंदा॥
पत्तोदये दिणअरे गुणसंपदाये
सोहन्ति फुल्लकमलांइ न जामिनीषु॥ १७ ॥

सूत्रधारः—(स्मृतिमाभिनीय सानन्दम्)

प्रिये, श्रूयताम्। अस्ति किल दाक्षिणात्यकुलकमलमुकुलविकासभास्करेण भारद्वाजगोत्रजलनिधिसमुत्पन्नकौस्तुभेनेव संतोषितश्रीपतिहृदयेन समस्तविद्वज्जनगर्वसर्वंकषसर्वस्वदानदीक्षाविचक्षणश्रीमद्दीक्षित-बालकृष्णतनूजन्मना अधिगतसमस्तविद्याविनोदानन्दितसकल - विद्वज्जनेन आनन्दवनवास्तव्येन मत्परिचर्यागुणसंतोषजनितप्रसादेन श्रीमद्दीक्षितशंकरेण नाटकमेकं समर्पितमस्ति, तदभिनेतव्यमिति।

नटी—उज्जउत्त, अत्थि तारिसी सामग्गी जेन तत्प्रकरणं णच्चेदि अज्जउत्तो, सअलसहामहाजनो अणुरंजीअदि।

सूत्रधारः—भवत्येवात्र प्रमाणम्।

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

**नटी**—(सगर्वम्) कधं विअ ?

**सूत्रधारः**—शृणु प्रिये—

गायन्ति यच्च विवदन्ति वदन्ति यान्ति
नृत्यन्ति यत्किल पतन्ति तथोत्पतन्ति ।
संताडयन्ति लडयन्ति विडम्बयन्ति
तत्सर्वमेव ललितं ललनाजनानाम् ॥ १८ ॥

तत्त्वद्दर्शनविलोकनवचनप्रणामनृत्यगीतादिचातुरीधुरीणतयानुरञ्जितोऽयं महाजन-समाजः नाटकं बहु मंस्यते ।

**नटी**—(सहर्षं) अज्जउत्त ता किं मण्णच्चं कादधं (?)

**सूत्रधारः**—अथ किम् । आदिश्यतां वर्णिकापरिग्रहाय शैलूषजनश्च किल । प्रभाते प्रवर्तिष्यते रंगसागरः ।

**नटी**—अच्चरिअं २ ! अज्जउत्तं एदे उण तु अहिअ अठ्ठिदं जाणिअ सज्जीहोदि सैलूसजणो कोवि ब्रह्मर्षिः, कोवि देवर्षिः, कोवि राजर्षिः केवि अपोत( ?तपोवन-)वासिजनाः, केवि अन्तेवासिजनाः, केवि सुहृदः सज्जिय वज्जीअन्दि म (?) अंगाः । एसो तत्कलकलेहिं पूरिदो रंगो ।

**सूत्रधारः** (विलोक्य, सहर्षम्)—

भूपालमौलिचन्द्रं दृष्ट्वाऽसौ रंगसागरो वृद्धिम् ।
प्राप्तः सम्प्रति पूर्णां, सज्जीभव सत्वरं त्वमपि ॥ १९ ॥

**नटी**—एसम्हि सज्जा । आणवेदु अज्जउत्तो ।

**सूत्रधारः**—गीयताम् ।

**नटी**—जहा आणवेदु अज्जउत्तो । एसो बरिसा रिदू ।

**सूत्रधारः**—प्रिये संप्रति ललिततरनवजलभरनिभृतजलवहविमुक्तवारिकणगणकलितललित-नवनीपवनविकसत्कुसुमसमूहमिलदलिकुलकम्रतममञ्जुमञ्जीरसिंजितमंजुलगुञ्जारव - पुञ्जम् । विदलन्नवकनककेतकद्रोणकोणविगलितपरागपुंजपिंजरितनृत्यन्मयूरकुलाने-ककेकाकोलाहलाकुलितदशदिगन्तरालालंकृतभुवनतलं विलसति । तथा च—

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

नवपल्लवकृतमाला सज्जघना मंजुलकुजा[चा]ग्रा।
अधिकाननरोचिष्णुर्वर्षा वनितेव' हर्षमावहति॥

तर्हि को विलम्बः, गीयताम्।

नटी (गायति)—

जिमि जिमि बरिसइ मेहो णेहो कंताण जासु हिअएसु।
तिमि तिमि पाउस दिअहे पसरदि नीरम्मि णेह बिन्दुव्व॥ २०॥

झंझामारुदणच्चिदणी वाणच्चद मोर समुन्नद गीवा।
मंडुअतो अजणो जणि पीवा आवइ पाउस रे जण जीवा॥ २१॥

सूत्रधार—प्रिये, साधु गीतम्। यत् किलायं—

शृंगारहास्यरसमिश्रितचित्तवृत्ति-
श्चित्रं सितासित इव प्रविभाति रंगः।
मायाविलासलसमान इवात्मभावो
भावो भवे यदि भवेदभवो भवे स्यात्॥ २२॥

ततश्च—

जटामुकुटमण्डिता ललितमौञ्जिबन्धावृताः
कुशाक्षवलयोत्कराः कलितकृष्णचर्माम्बराः।
ब्रुवन्त इह सत्कथाः विबुधदीर्घिकायाः पथा
गताश्च सनकादयस्तदलमत्र न स्थीयताम्॥ २३॥

(इति निष्क्रान्तौ)

॥ प्रस्तावना ॥

ततः प्रविशन्ति यथानिर्दिष्टाः सनकादयो ब्रह्मर्षिदेवर्षिराजर्षिसंघाः सान्तेवासिनः ससखायः॥

(एतावन्मात्रं प्राप्यते)

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## [II]

*[ द्वितीयग्रन्थस्य (कस्याश्चित् चम्प्वाः ?) कानिचित् पद्यानि ]*

**Beginning (Folio 5a) : (The first 44 ślokas are missing)**

पुनरपि कश्चित् वारिणो विषमकारित्वमवेक्ष्याह-

**तव दर्शनमविदर्शनमिह सितमसितं तनोति संगेन।**
**गंगे जलं यदंगे पतितमपतितं जनं कुरुते ॥ ४५ ॥**

कश्चित् कृपालुत्वमवेक्ष्याह—

**गुणैही(र्हो) नं दीनं पदकमललीनं गिरिभवे**
**भवौघैः प्रोद्विग्नं सततमनभिज्ञं च यदि माम्।**
**कृपालेशावेशाद्विकलितकटाक्षैः कलयसे**
**जगन्मातः प्रातः कमलमुखि नातः परतरम् ॥ ४६ ॥**

तेषु च कश्चित् कविरलंकारस्यापि भ्रान्तिहा(का ?)रित्वमवेक्ष्य गंगामस्तुवत्-

**पयःपूरभ्रान्त्या क्षुधिततरहंसैरधिगता (cf. GAC ४.५०)**

कश्चित् कविर्भागीरथ्या नानात्वभावस[म]भिसंभाव्यमानः शब्दालंकारमयेन पद्येनास्तुवत्—

**वशीकरणमौषधं ललितमुक्तिवामभ्रुवाम् (cf. GAC ४.५२)**
**दुरिततरुदारुदारणकारणमेतत्तवाम्बुकरपत्रम् ।**
**चित्रं पवित्रमेतत् पुण्यतरुं पल्लवैश्च सन्धत्ते ॥ ५० ॥**

तदनु ततो ज्यायान् रामचन्द्राभिधानः अस्तवीत्-

**शोभाविभ्राजि भूभृत्तटभुवमभितः शोभितं भाग्यभाजां**
**भक्तानां भुक्तिमुक्तिप्रभुविभवमतो भावितं भूतिमद्भिः ।**

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

भूसंभूतप्रभावं भवशिरसि विभाभासितं तद्भवत्या
भूयोभव्याय भव्याकृति भवतु भवध्वंसि निर्दम्भमम्भः ॥ ६० ॥

तत्र तेषु कश्चन महर्षिः गंगातटनिकटस्थितं दाम्भिकं गौडपण्डितं वकं चावलोक्य तं प्रति (त्य ?)प्रस्तुतालंकारोक्त्या प्राह-

यदा (सदा) मौनं धत्ते विमलतरवर्णेन कलितः
पदं मन्दं मन्दं रचयसि बकालीपरिवृढः ।
यदा दीनं मीनं न हरसि नवीनं किल तदा
भवन्तं कः सन्तं न वदति हसन्तं द्विजवरान् ॥ ८७ ॥

ततः सर्वे महर्षयः स्वं स्वं माध्याह्निकं कर्म समवसाय्य त्रिगुणस्वरूपत्वादादावेव कृतसमस्तदुरितावलिभंगां गंगां स्तुवन्ति स्म ।

। इति प्रथमोच्छ्वासः । (Fol. 8a)

**End :**

सुरभीयुतं यमुनातटे कृतशेखरे शिखिबर्हिणम् ।
धरणीधरं गिरिधारिणं शरणप्रियं चरणप्रियम् ॥ १९ ॥

परदारणं वरवारणं भवकारणं भवहारिणम् ।
हतवारणं रिपुमारणं निजतारणं व्रजसारिणम् ॥ २० ॥

हयमारकं वकदारकं हतपूतनं ह्यघदारकम् ।
निशिगामिनं युवतीप्रियं मरमर्दनं निजरञ्जनम् ॥ २१ ॥

शुकसेवितं सनकप्रियं शरणागतं कृतरक्षणम्
कलितांगनं कविभञ्जनं जनरञ्जनं भजताज्जनः ॥ २२ ॥

कमलापतिं रमणीरतिं समतायुतं जनजीवनम् ।
यदुनायकं रिपुपावकं व्रजबालकं हतदावकम् ॥ २३ ॥
(Fol. 21b)

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## [III]

*[कवेस्तृतीयायाः कृतेः (चम्प्वाः?) केचन अंशाः]*

Folia numbered by the Editor

**Begining** (Fol. Ia) : (The first 40 ślokas are missing)

अपि च—

बाढं प्रौढप्रतापानलबहलमिलज्ज्वालमालावलीढः etc. ॥ ४१ ॥

(cf. GAC २८)

प्रोद्यद्यत्तरुणप्रतापतपनोत्तापादिवायं रविः
पानीयैः परिपूरितात् क्वचिदहो धाराधरानन्तरा।
कृत्वा याति निमज्य तिष्ठति चिरं वाद्‌र्धौ पयोजैः समं
सख्यं संतनुते करैरनुदिनं पानीयमाकर्षति॥ ४२ ॥

प्रोद्यत्-श्रीबलिवंडसिंहयशसां स्तोमेन सोमो जितः
सूर्योऽपि प्रसभं विवर्द्धितपरोत्तापः प्रतापेन च।
मन्ये पर्वणि तुल्यदुःखजनितस्नैहैकबद्धस्पृहा-
वेतौ मन्त्रयितुं परस्परमहो नो चेत्कथं संगतौ॥ ४३ ॥

दारितारिपृतनावरमुण्डप्रोच्छलद्रुधिरपूरितकुण्डः
कुण्डलीन्द्रविलसद्‌भुजदण्डः काशिकापुरनृपो बलवण्डः ॥ ४४ ॥

धर्मशास्त्रविलसच्छुभपण्डो मण्डलाधिपतिषूद्धतदण्डः
कर्णभूषणविभूषितगण्डः पुण्डरीकनयनो बलिवण्डः ॥ ४५ ॥

वारितोद्धतविवादवितण्डः कीर्तिखण्डजितसत्शशिखण्डः
तीर्थराजपतिमर्दनचण्डः काशिकापुरनृपो बलिवण्डः ॥ ४६ ॥

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

यवनपवनपातक्लान्तकाशी निवासी
जन इह नहि वस्तुं गन्तुमेव क्षमः स्यात्।
कथमपि बलिवण्डो विन्ध्यवत् स्थैर्यशाली
यदि न भवति वेगादन्तरा चान्तरायः॥ ४७॥

सोऽयं समुत्तार्य च राज्यभारं सुतौरसं वीक्ष्य गुणौघसारम्।
निधाय तस्मिन् निजभारमारादन्यं विचारान्तरमाचकार॥ ४८॥

सन्नीतिरीतिगतिचुम्बितचित्तवृत्ति-
दैवासुरं कलिमहर्निशमाकलय्य।
भूमण्डलं कियदिदं भुजदण्डयोर्मे
संरक्षणाय किमितीव दिवं जगाम॥ ४९॥

ततः, यश्च सुकृते एव कृतरतिर्न दुष्कृते, चाप एवं बद्धमुष्टिर्न वितरणे, मृदुर्वचस्येव न समरभूमौ, लोभवान् कीर्ताविव नार्थे, भीतः पापात् न शत्रुतः, कामी निजकामिनीष्वेव नापराङ्गनासु, युधिष्ठिर इव युधि स्थिरः, उन्मूलितशल्यः सत्यवाक् च, भीमसेन इव उद्धृत-बन्धुभारः बाहुबली च, अर्जुन इव धनुर्विद्यायां संपादितप्रतिज्ञश्च, नकुल इवोत्तमहयारोहकुशलः खड्गयुद्धविशारदश्च, सहदेव इव सकलशास्त्रवेत्ता पालितगुश्च, सकलजीवलोकपरायणः, त्रिवर्गसमासक्तविस्पष्टमोक्षधर्मराजधर्मरचनानिपुणः। तस्य तनूजनिः—

अस्ति क्ष्मापालमौलिस्थलमुकुटलसद्रत्नरश्मिप्रकाश-
ज्योत्स्नापानप्रकामोल्लसदलसचलत्खड्गधाराचकोरीम्।
नाना वैरिप्रतापज्वलदनलकणप्राशनोन्मीलिताक्षीं
नित्यं प्रीत्या वितन्वन् जयति जनसुहृच्चेतसिंहः क्षितीन्द्रः॥ ५०॥

**Middle** (Fol. VIII a.), A new Ucchvāsa :

अथ विजयदशम्यामेव विष्णवृक्षयोगे
सकलरिपुजयार्थं संप्रतस्थे बलौघैः।
दिगधिपतिवरांशैराशु संभूषितांगे
विरचितविजयश्री रामवच्चेतसिंहः॥ १॥

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

अथ नरपतिधुर्यो धैर्यवान् धीरगण्यः
प्रचितवरपुण्योऽजिह्मपद्माहिनीशान्।
निजनिजमथ सैन्यं सज्यतां रज्यमानं
सितचपलपताकं विद्विषो निर्जयाय॥ २॥

विकसितवरचेताश्चेतसिंहः स्वभृत्या-
नदिशदखिलसैन्यं स्वीयमाशोभनीयम्।
अगजगजतुरंगस्यन्दनप्रौढपत्ति-
प्रभृतिसमरयोग्यं कल्पतामल्पकालात्॥ ३॥

प्रचलत्तुरगक्षुरसंक्षुभितक्षितिपक्षितितक्षणलक्षगुणा ।
समुदञ्चदमन्दचलत्सुरजः प्रतिरोधितभानुकरोष्णगुणा॥ १७॥

यदुद्धतासिधारयारयात् खिलीकृताखिला
बिलानि मार्गती सती कुमार्गमार्गगामिनी।
विलीयते स्म वाजिनी नवाजिराजिराजिता
धरातले नदीजले हिमाचले तथाऽनले॥ २५॥

**End (Fol. X a) :**

प्रतापहुतभुग्विभुः किल विभाति भूमीपते-
र्यदिन्धनगताः [⏑ – ]कति न साम्प्रतं शत्रवः।
ज्वलन्ति ककुभां मुखेष्वथ पयोधितीरं गताः
वसन्ति न नमन्त्यतः परिपतन्ति पाथोनिधौ॥ ३१॥

(end of the MS)



CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## खड्गबन्धः

(उच्छ्वास ५, श्लो० ३४—३५)

पृ० ५७




भासुरारुणसंभारभावितांघ्रियुगा सदा,
दारुणद्युतिविद्योतिकाश्यपिप्रस्फुरत्प्रभा ।
भाति भूमौ सुलावण्यचञ्चत्चतुरता सभा,
भार्या दात्री भावुकानां त्रिनेत्रस्य स्वभावतः ॥

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## शरयन्त्रबन्ध ( A variety of तुरगबन्ध )

( उच्छ्वास ३, श्लो० ३ )

पृ० ३१

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| पू | त | ना | मा | र | ण | ख्या | तः |
| त | वा | य | भ | व | तां | मु | दा |
| गी | त | ना | मा | र | ण | प्री | तः |
| शि | वा | य | भ | व | तां | स | दा |

पूतनामा रणख्यातः तवाय भवतां मुदा ।
गीतनामा रण प्रीतः शिवाय भवतां सदा ॥

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

## पद्मबन्धः

(उच्छ्वास १, श्लो० १९)

पृ० ५




**सा सभा यस्य सारैव वरैः साधुगतैः न सा ।**
**सा नतै रभिसारा वै वैरासा कामभाससा ॥**

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy



मकरवाहिनी गंगा, अहिच्छत्रा, मृण्मूर्ति, गुप्तकाल

CC-0. Ganga Nath Jha Campus. Central Sanskrit Uni. Digitized by Sri Muthulakshmi Research Academy

